# ।।काव्यश्रीः।।

(बहुविधकवितासङ्ग्रहः)

प्रथम-संस्करणम्

डॉ.हिमांशुगौडः

# ।। काव्यश्रीः ।।

प्रणेता – डॉ.हिमांशुगौडः

ISBN –978-81-943558-1-6



प्रथम-संस्करणम् २०२०

२०० प्रतयः

।। बहुविध-कवितासङ्ग्रहात्मकः प्रबन्धः ।।

**Publisher:**



**True Humanity Foundation**

**Non-Governmental Organization**

# KavyaShrih

**Author: Dr. Himanshu Gaur**

**ISBN – 978-81-943558-1-6**



**First Edition 2020**

**200 Copes**

**Collective book of many types of poems.**

---

**Publisher:**



**True Humanity Foundation**

**Non-Governmental Organization**

# विषयसूची

## *प्रथमा वल्लरी*
## *(छन्दोबद्धाः कविताः)*

*द्वितीया वल्लरी*
*(गीतानि)*

*तृतीया वल्लरी*
*(मुक्तकगद्यकाव्यानि)*

## *चतुर्थी वल्लरी*
## *(विशिष्टकाव्यानि)*

# १. प्रथमा वल्लरी ॥
# छन्दोबद्धाः कविताः

## १.॥ अस्मासु काव्योदयः ॥



जाने नो कविचातुरीश्च मतिमन् शब्दस्य विन्यस्ततां
नो वा लक्षणशास्त्रसारिमनसा काव्यानि कर्तुं क्षम:
काले वै हृदयोत्त्थभावसलिलैर्वर्षामि सारल्यतो
रोद्धुं चाक्षम इत्यत: क्वचिदियं धारा प्रकृत्या वहेत् ।।१।।

केचिच्छब्दनिबन्धनेषु कुशला: केचिच्च शास्त्रार्थिन:
केचिन्नर्तकवत् स्वबोधपदकैर्नृत्यन्ति काव्याङ्गणे
हर्षोद्रेकवशाद्वयं तु कवितालोके पताम: प्रिये
शैवोद्भासविभासिताश्च पुरुषा: सर्वं हि कर्तुं क्षमा: ।।२।।

यत्नात्काव्यनगं न रोहति पुमान् शक्तिर्हि मुख्या यतः
पूर्वोपार्जितपुण्यपुष्पसुरभिं काव्यात्मिकीं जिघ्रति

काचिच्चापि कृपा फलेद्गुरुजने श्रद्धाभिरासा च या
एतैस्सम्मिलितैर्गुणैश्शिवहृदा काव्यं नरश्चाश्नुते ।।३।।

दृष्ट्वा जीवनपद्धतिं प्रतिदिनं धावत्समं भासते
नानाक्लेशनिमग्नलोकगतिको नैवं च विश्राम्यति
कश्चित् श्रीक्षणलब्धहर्षमनसा मोदेत नाशात्मके
काव्यश्रीश्च बिभर्त्ति तत्पदमिवाक्षीणं सुखं सर्वदा ।।४।।

-------

## २.।। नव्यसृष्टिप्रथायां शिवापूजनम् ।।



श्रीगणेशस्स्वलोकाज्जनाँल्लोकयन्
दिव्यदृश्योऽप्यदृश्यो जगद्ध्वान्तहो
नृत्यकाले स शुण्डं परिभ्रामयन्
नव्यसृष्टेर्दिने वक्ति दुर्गार्चनम् ।।१।।

ब्रह्मलोकाच्च वा विष्णुलोकाच्च वा
शैवलोकाच्च वा स्वर्गलोकाच्च वा
वारुणान्नागलोकाच्च या घोषणा
नव्यसृष्टेर्दिने स्याच्छिवापूजनम् ।।२।।

सूर्यलोकाच्च या: वह्निनिष्क्रान्तय:
धग्धगच्चेति शब्दादिमन्त्रार्थकाः
अम्बिकार्चारतास्ता भवन्त्यस्सदा

नव्यसृष्टिप्रथायां शिवापूजनम् ।।३।।

शङ्कराचार्यवृन्दैर्मठाधीशकैः
धर्मविद्भिर्महामण्डलेशैश्च वा
शाक्तशैवैस्तथा वैष्णवैश्शाब्दिकैः
चर्यते नव्यसृष्टौ हि दुर्गार्चनम् ।।४।।

चन्द्रकान्तप्रभं सूर्यभाभासितं
पुष्पलावण्ययुक्तं च पुण्यावहं
स्यान्नवाशायुतं नव्यहर्षप्रदम्
आदि सृष्टेर्दिनं मोद्यवासन्तिकम् ।।५।।

------

## ३.।। विचित्रपुरुषाः ।।

**************

(विचित्रपुरुषाणां वर्णनमत्रास्ति । २०१४ जूनमासे लिखितमेतत्। तस्मिन् कालेऽहमपि तस्मिन्नेव तरङ्गे तरङ्गायित आसम् । )

--------

भ्रमन्ति लोके हि विचित्ररूपाः नैजं स्वरूपं परिगोपयन्तः।
विद्याश्च तेजांसि मनस्सुकल्पाः, विभिन्नलोकेषु चरन्ति रात्रौ ।।१।।
अदृश्यरूपैश्चरतश्च भूतान् साक्षादिवैतेऽप्यवलोकयन्ति ।
अब्धेश्च तुल्यं हृदयं गभीरं न पारमेतुं हि समे समर्थाः ।।२।।
मज्जन्ति मोदाम्भसि चेत्कदाचित् न काँश्चिदेते गणयन्ति पार्श्वे ।

नृत्यन्त्यहेतुश्च हसन्ति तीव्रस्स्वरैश्च गायन्त्यथ गीतकानि ।।३।।
यद्वा शरीरे प्रभवेच्च तेजो धावन्ति वेगैर्हयवच्च वायौ ।
मरुज्जलं वह्निरथावनिश्च खं स्वप्रभावैरधिबोधयन्तः ।।४।।
तत्तद्गुणैर्भावविभाविताश्च लोकं स्वनेत्रैरभिलोक्यमानाः।
धैर्यादिभावैरपि संलसन्तश्चोत्साहमार्गैरभिवर्तमानाः।।५।।

...........

## ४.।। अस्माद‍ृशां जीवनम् ।।

*********

बाल्यं क्रीडनकादिमित्ररहितं क्षुत्पीडितं दैन्यकं
वित्ताभाववशाच्च वा गुरुकुले पित्रा ह्यहं क्षेपित:
तत्राऽभावगतोऽपि दानमनसा भोक्तुं परस्याश्रित:
वेदाद्यध्ययनेषु लग्नगतिक: कालो व्यततीतो मया।।१।।

वित्तार्थं परसेवया विगलितं स्त्रीसौख्यसंवर्जितम्
नानाकार्यसमारतं च धनिनां दास्ये रतं सर्वथा
वित्ताभाववशाद्विवाहरहितं दौर्भाग्यरूपं सदा
प्रायश्चैव कुटुम्बभारवहने संयापितं यौवनम्।।२।।

वार्धक्यं हरिपूजया विरहितं वैवश्यभूतं मम
यातानेकसुहासदृश्यपरिसंस्माराश्रुनेत्राश्रितं
लब्धं किं न च किं विचिन्तनपरं संसारमायावृतं
नैराश्यप्रतिमूर्त्तिदु:खजनकं विद्वन्! व्यतीतं मया।।३।।

इत्थं व्यर्थमिदं मदीयजननं जातं धराभारवत्
चिन्तादु:खनिराशभावभरितं वित्तार्थदास्यङ्गतम्
शास्त्रं चापि जगद्रतस्य भवतादुद्धारकं प्राणिन:
त्यक्त्वा मोहमत: कुटुम्बजनितं शम्भुं भजेद्भक्तिभि:।।४।।

............

## ५.।। यद्गतं तद्गतम् ।।

✻✻✻✻✻✻✻✻✻

यद्गतं तद्गतं तस्य किं चिन्तनं
चिन्तनैः रोदनैः लभ्यते किं हि तत्
अद्य यद्विद्यते तस्य संरक्षणं
तेन मोदश्च जीव्यं कुरु श्रीयुतम् ।।१।।

शत्रवो नैव मित्राणि ते भूतले
कर्मणा हेतुना स्वार्थतस्तद्भवेत्
यच्च भाग्ये भवेत्तन्न तस्मात्पृथक्
भाव्यते श्रूयतां यद्गतं तद्गतम् ।।२।।

केन दत्तं सुखं केन लब्धं धनं
कस्य कीर्तिर्गृहाणि प्रियामोदनम्
कश्च शेते सुखैः,कस्य नो दुःखता
यस्य शम्भौ रतिर्भूयसी वर्तते ।।३।।

नैव विद्याऽस्ति मे नैव वित्तं महत्
शोभते नैव कीर्त्या प्रियाभिर्मम
जीवनं नीरसं निर्जनं तद्वनं
यत्र शुष्काश्च वृक्षाश्च जीवाः मृताः।।४।।

ईदृशीं भावनां दुर्दशां च त्यजेत्
हर्षभावं धरेन्मानसे, कर्मभिः
प्राप्य सर्वं शिवस्य प्रसादैर्जन!
मोदतां मा शुचः यद्गतं तद्गतम् ।।५।।

भूतकालं न चिन्त्यं गतं दुःखदं
भाविनश्चिन्तया नैव देहं दहेत्
वर्तते वर्तमाने नरो यस्सुखैस्-
तस्य दुःखं कुतो यद्गतं तद्गतम् ।।६।।

ते श्रिया शोभितास्ते धियोद्बोधिता
स्ते क्रियाभिस्सदा मोदिताः वर्धिताः
नैव शोचन्ति दुःखैरपाकुर्वते
यद्गतं तद्गतं मोदितास्सज्जिताः ।।७।।

यैर्विनष्टाश्च बाधाश्शिवध्यानिभिर्-
दत्तचित्तैश्च चिन्त्यं समासादितम्
ते तु हर्षन्ति नित्यं नवैः कौतुकैर्-
यद्गतं तद्गतं श्रीभरो जीव्यताम् ।।८।।

( लेखनसमयो दिनाङ्कश्च - १९-०४-२०१५ , १०.३० रात्रौ । रा.सं.सं. भोपालपरिसरस्थच्छात्रावासस्य, ४३५ सङ्ख्याके कक्षे )

..........

## ६.।।दिवसाः शुष्काः रात्रिस्तृषिता।।



अन्धकारैरिदं मे जगद् व्यावृतं
निर्जनं निर्जलं नीरवं सम्भवत्
कीदृशं व्याकुलत्त्वं समावर्धते
नैव जाने तृषा कीदृशी वर्धते
।।१।।
सौरभं पुष्परागाः मयाऽन्वेषिताः
नैव लब्धाः, सुदूरं फलं कल्पितम्
शुष्ककण्ठः पिपासाकुलः क्षुत्कुलो
जीवति त्वद्विना त्वां समाकाङ्क्षयन्
।।२।।
जीवनाशान्वितस्त्वत्पथं लोकयन्
दह्यमानासु सिक्तासु संव्याकुलः
आगमस्य प्रतीक्षारतोऽयं जनो
यौवने ते प्रिये दर्शनं काङ्क्षति

।।३।।
कण्टकानां च शय्यास्ति वातेऽनलः
चन्द्रमास्तीव्रतापी प्रिये त्वद्विना
त्वं न चायासि चेज्जीवितुं न क्षमः
सद्य आयाहि मे चित्तोषिणी भोः प्रिये
।।४।।
त्वन्न जानासि जीवेम दुःखैर्वयं
कालमायापयामः कथं त्वद्विना
ते क्षणं वीक्षणं चेत्समालिङ्गनं
जीवने सत्फलं प्राप्नुयामो द्रुतम्
।।५।।
कामिनी भामिनी चित्तसंह्लादिनी
सर्वदा याऽस्ति मे सा मनोरञ्जिनी
यौवने सारभूते निशारामदे
लप्स्यते त्वं कदा जीवनेऽस्मिन् मया
।।६।।
कामतापस्य संव्यग्रताव्याकुलो
यस्त्वयाऽऽलिङ्गितोऽयं स्मरार्त्तो जनः
नैव जाने सुखं कीदृशं ह्यद्भुतं
त्वच्छुभस्पर्शनैर्जायते हे प्रिये ।।७।।

# ७.।।विचित्रं हि चित्रम्।।



न दानं ददत्यर्थिदीनेभ्य एवं
दयां नैव कुर्वन्ति जीवे दयार्हे
सदा स्वार्थचक्षुर्भृतास्सर्वलोके
महामण्डनं चाङ्ग्लवस्त्रं धरन्ति ।।१।।

यदा भिक्षुको याचते दीनताभिस्-
तदा पण्यमेकं न हस्तात् पतेद्वै
स्वमित्रेषु भोज्येषु वस्त्रेषु नैजे
जलानीव वित्तानि ते वाहयन्ति ।।२।।

सदा राजदत्तानि वित्तानि नीत्त्वा
मुदाऽध्यापयन्तोऽपि विद्यालयेषु
स्ववृत्तिस्थितिस्थापनायाऽर्थिनस्ते
मुधा छात्रजीव्यं विलुण्ठन्ति चौराः।।३।।

न च च्छात्रवृन्दोऽस्ति नम्यो न मान्यो
दधत्याङ्ग्लवत्केशसज्जां च वस्त्रम्
कुभोज्यं कुदृश्यं कुचेष्टां चरन् सन्
सदा कामिनीनां पुरस्सम्भ्रमेच्च ।।४।।

यदाऽश्लीलचित्रैश्चरित्रस्य नाशं
प्रकुर्वन् सुहास्यं कथं प्राप्स्यतेऽथ

कथं विद्यया भूषितो वा युवा स्याद्
अतश्शास्त्रजीव्यं सदा जीवताद् भोः ।।५।।

यदा षोडशे कामपीडानिपीड्यो
भवेत् कामिनीषु प्रसक्तश्च शोभाम्
प्ररोहेत्तदा वीर्यवित्तादिनाशा
ज्झटित्येव दौर्बल्यमीयाच्च मौढ्यम् ।।६।।

सदा धावतां कामिनीनां पुरश्च
स्वविद्यार्थिकालेऽप्यनादृत्य विद्यां
न दोषोऽस्ति तेषां, क्व कामैर्हतानां
भवेच्छास्त्रचिन्ता, सदा कामचिन्ता ।।७।।

अथाऽश्लीलवस्त्रैश्च मार्गे लसन्त्यः
स्मितैः मोहयन्त्योऽपि यूनां मनांसि
न जानामि वाञ्छन्ति किं ताः मनत्सु
रतिं वा चरित्रं विचित्रं हि चित्रम् ।।८।।

विलोक्याशुरासां सुरूपं च सज्जां
नितम्बौ कुचौ स्पष्टरूपेण दृष्ट्वा
क्व वै ब्रह्मचर्यं भवेद्यौवनेऽस्मिन्
वदेद्यस्स शुक्लं ह्यसत्यं प्रवक्ति ।।९।।

.........

लेखनसमयस्स्थानञ्च – वर्षिततर्तौ, जुलाई २०१५,
बहादुरगढस्थे गृहे ।

.............

## ८.।।कोऽपि वक्तुं समर्थः।।

*************

गगनगतहिमांशुं कोऽपि लब्धुं समर्थः
रविमपि निजमुष्ट्यां को ग्रहीतुं समर्थः
कृतसुकृतजनोऽहो नाकमेतुं सदेहः
कथमिव च समर्थः कोऽपि वक्तुं समर्थः।।१।।

यदि गुरुजनसेवा लेशमात्रा कृताऽपि
यदि च सुरतटिन्यास्स्तोकमम्भश्च पीतम्
परहितसुरतस्स्याच्छम्भुगीतेषु सक्तस्-
सुरनगरसुवाप्तिं को निरोद्धुं समर्थः।।२।।

न हि गणयति रात्रिं नैव भोज्यस्य चिन्ता,
सकलमपि च चित्तं योजयेच्छास्त्रमार्गे
विशति झटिति चित्ते शास्त्रपङ्क्तिर्जनस्य
बुधसदसि च यातुं कोऽत्र रोद्धुं समर्थः।।३।।

अपि पठतु सुशास्त्रं वेदवार्तां करोतु
गुरुजनसहवासं यातु वैराग्यकामः
मदनधनसमाजाक्रान्तचित्ते त्वदीये
कथमिव शिवतत्त्वं सम्प्रवेष्टुं समर्थः ।।४।।

अपि सकलदुराख्यैस्संवृतो दुष्टचित्तो
रमणकरणवस्तुभ्योऽर्पितं जीवितं वा
शिव इति च कदाचिन्मृत्युकाले मुखे स्यात्
कथय कथय मुक्तिं को निरोद्धुं समर्थः।।५।।

नरवरशुभभूमौ चेत्तपांस्याश्रितानि
फणिकृतपदभाष्यं चेत्समागाहितञ्च
हरिचरितकथा चेच्छ्रूयते श्रद्धयाऽहो
वद वद तव तेजः कोऽत्र सोढुं समर्थः ।।६।।

----

लेखनसमयस्स्थानञ्च - मार्च २०१५ रात्रौ,
भोपालपरिसरे,तृतीयतलस्थे ४३५ सङ्ख्याके कक्षे ।

.........

## ९.।। स्वतन्त्रता ।।

************

मनुष्यलोकस्य कथैव का स्यात्
इष्टा खगाद्यैरपि वै स्वतन्त्रता
अन्नं च पानं लभतां न भूरि:
तथापि भग्ना न भवेत्स्वतन्त्रता ।।१।।

विवाहहानिस्त्वपि वित्तहानि:
सामाजिकैस्स्यादपि हानिरन्या
मान्या प्रमाण्या जगतीव जीयात्
सदाऽस्मदीया मनसस्स्वतन्त्रता ।।२।।

शिवैकभावप्रदसौख्यधारिणी
ब्रह्मैकनित्यप्रतिबिम्बकाशिनी
जीवैस्समैश्शाश्वतकाङ्क्षितेयं
जयेच्च गीयेच्च सदा स्वतन्त्रता ।।३।।

मृतस्स वै यो परतन्त्रजीवितः
स जीवितो यो निजतन्त्रजीवित:
समे समं बद्धुमिह प्रयत्ना:
धिक् कीदृशीयं मनुजस्य दुष्टता ।।४।।

ये वृत्तिपाशे धनलब्धुकामा:
बद्धास्तथाऽन्ये ललनाशरीरे
गेहेऽपि भोगेऽपि निबद्धजीवा:
कथं वदन्तीह वयं स्वतन्त्रा: ।।५।।

सूक्ष्मार्थमेत्यापि चरेच्च चर्चां
न केवला देशगता स्वतन्त्रता
शरीरपाशेऽपि ह कर्मपाशे
बद्धा: वयं स्याम कथं स्वतन्त्रा:।।६।।

शिवे रमेताऽपि सुखं व्रजेद्वै
आत्मेति निश्चेतृपदं प्रयाहि
विनश्य ज्ञानेन च कर्मबन्धं
जोघुष्यतामद्य वयं स्वतन्त्रा:।।७।।

--------

# १०.।। संस्कृतं संश्रयामो वयम् ।।

*************

जीवनं यैश्च सौख्याब्धिसम्मज्जितं स्यान्नवाशाभरं नस्तथोत्साहभृत्
ताँश्च गीर्वाणवाणीनिबद्धान् वयं संस्कृतग्रन्थपाठान् पठामोऽधुना
।।१।।
शुद्धताबुद्धताभावविज्ञानताः मानवोद्धारचर्यां शिवे मग्नतां
प्राप्नुमो येन सत्यप्रकाशान् वयं संस्कृतस्याश्रयं संश्रयामो ह्यतः
।।२।।
दीनदुःखातुराणां च सेवारताः व्याधिमग्नेभ्यः आरोग्यदाः तुष्टिदाः
जीवमात्रे दयादृष्टियुक्ता हि तत् संस्कृतेनैव कर्तुं जनैश्शक्यते
।।३।।
किञ्च कर्तव्यमस्तीति सञ्चिन्तयन् जीवनस्यापि लक्ष्यं च निर्धारयन्
लोकवेदार्थकार्याणि कर्तुं क्षमः संस्कृतस्य प्रभावान्न को मोदते
।।४।।
सौख्यमाप्तं न वा धावमानैः क्वचित् शान्तिरश्वत्थमूले क्वचिल्लभ्यते
एवमेव प्रियार्थप्रदं शोकहं शास्त्रमार्गो न किम्मानुषैश्श्रीयते
।।५।।

लेखनसमयस्स्थानञ्च - अगस्त २०१८ , दिल्ल्याम् ।

............

## १९.।। त्यज चायपानम् ।।

*************

औष्ण्यं हि देहे द्रुतमातनोति स्नेहस्य नाशं कुरुते द्रुतं यत्
शौष्क्यञ्च नाडीष्वपि सन्तनोति,तस्माद्द्विज!त्वं त्यज चायपानम्
।।१।।

ऊर्जामयेत् चायभिषक्सुपानैस्स्फूर्तिश्च भूयान्नवचिन्तनञ्च
शैत्यं प्रणश्यत्यपि चायपानां,वदन्ति ये तस्य मदे निबद्धाः
।।२।।

मूढाः न जानन्त्यपि दुष्प्रभावं, न वाऽऽमनन्त्यन्यबुधैर्निबुद्धाः।
त्यक्तं बुधैराङ्ग्लजनैः प्रदत्तं,त्यज चायपानं त्यज चायपानम्
।।३।।

श्वेतान् कणान् रक्तगतानहो यन्नश्यत्यथाक्ष्णोरपि तेज एवम्।
अन्धत्त्वमेवाददतीति नूनं, त्यज चायपानं त्यज चायपानम्
।।४।।

केशाः पतन्ति द्रुतमेव यस्मान्मूलाश्च तेषां शिथिलत्वमीयुः
मस्तिष्कहानिस्त्वपि देहहानिः,करोति यत्तत्त्यज चायपानम्
।।५।।

ये नैकवर्षैः परिपीतचायाः, स्वदेहशक्तिं च विनश्य भूरि
रुदन्ति, नश्यन्त्यपि चायदासास्त्यजन्ति ते नैव तथापि चायम्

॥६॥

कथं हि जिह्वेन्द्रियदास एवं बुधत्वमीयाच्च कवित्त्वमीयात्?

शास्त्रैर्निषिद्धं मदवर्धकं तत्, त्यज चायपानं त्यज चायपानम्

॥७॥

समूलमेनं न हि सन्त्यजन्ति,ये सभ्यवच्चाङ्ग्लचराः जनाश्च।

प्रभातकाले च दिनान्तकाले पिबन्ति ते चायपिपासचित्ताः

॥८॥

न चायपानैर्न हि मद्यपानैः,नरः कदाचिद्भुवि वर्धते वै

यद्वा मदं वर्धयतीव पानं[1],आत्मोन्नतिस्स्यात्कथमेव तस्मात्

॥९॥

अतो द्विजैनं त्यज मुद्धपानं, हानिङ्करं विस्मृतिवर्धकञ्च

क्षुद्धं च किञ्चित्क्षणमात्रमुद्दं, त्यज चायपानं त्यज चायपानम्

॥१०॥

द्विजस्तपस्याकरणात्तथैव, शास्त्रस्य भूयः परिचिन्तनैश्च

देवत्वमीयाच्च बुधत्वमीयान्न चायकाद्यैः मदवर्धकैश्च

॥११॥

चेच्चायपायी यदि मद्यपायी, चेद्दुग्धपायी बत निर्जलो वा

विलोक्यतेऽहो प्रतिभायुतो यो, न चायपानैस्सुकृतैर्हि पूर्वैः

॥१२॥

[1] चाय इत्याख्ये पेये निकोटीन इति मदवर्धकतत्त्वं भवति।

अतस्सदा पुण्यविवर्धकं यच्छास्त्रार्थदं यच्छिवदं शुभञ्च
मार्गो हि योऽलौकिकसौख्यदश्च,तपस्यया तद्धि लभेत विप्र
।।१३।।

लेखनसमयः – अपराह्ने , जून २०१७, रा.सं.सं.
भोपालपरिसरस्थे, सुदामातिथिनिवासे ।
............

## १२.।। पिब मनुज वाजीकररसान् ।।



(न चायं कॉफीं वा पिब मनुज वाजीकररसान्)

भवेद्गौर्वा शुद्धा ह्यपि च कपिला क्षीरकरिणी
न चेत् स्याद्वा पुष्टा बलकरपयोदाऽपि महिषी
अजादुग्धं पेयं ह्युभयपयसी नाप्यभवताम्
न चायं कॉफीं वा निखिलबलहं हे नर पिबेत् ।।१।।

पिबेत्पुष्ट्यर्थं गोक्षुरयुतसुदुग्धं यदि तदा
विनश्येत्क्लैब्यं तत्प्रभवति नवौजश्च तनुषि
अहो वीर्यं नव्यं सृजति बहु देहे सुखकरम्
यदा कुष्ठं चूर्णं पिबति हयगन्धं च पयसा ।।२।।

समं गोदुग्धेन प्रपिबति नरः संयमपरः
शतावर्याख्यं भैषजमपि बलप्राप्तिमनसा
हरिं स्मृत्त्वा सेव्यान्निशि च दिवसे कामचतुरः
दिनं चत्वारिंशद्भवति रतियुद्धे स विजयी ।।३।।

तथा शुण्ठीचूर्णं मधु च मधुयष्टिं सुपयसा
पिबेद्धेनोर्दुग्धे घृतमपि च सम्मिश्र्य विधिना
सुकण्ठं ते गानध्वनिरपि च गन्धर्व इव वै
बलं देहे जायेत नवरसता स्फूर्तिरधिका ।।४।।

नवं ग्राह्यं चूतत्वचमपि च पिष्ट्वा मदनधृत्
मृदापात्रेऽम्बौ सम्पुटविधिचरस्स्थाप्य निशि वै
प्रभाते पीत्वा स्यात्कमलवदनानां प्रियतरः
रतौ मानोद्भङ्गः कुरुत इह सर्वत्र सुखता ।।५ ।।

लेखनसमयः – जनवरी २०१८, गाजियाबादस्थे गृहे ।

## १३.।। वेदनानां कथा ।।

*************

कीदृशी वेदनानां कथा वर्तते सर्वलोकस्य नैजी व्यथा वर्तते
अत्र कः कं कथं केन वा तर्पयेत् हृत्सुतुष्टिश्च कैर्मानुषैर्लभ्यते

।।१।।
मित्रकैस्स्वार्थसिद्ध्यै मुहुर्वञ्चितः एकपक्षस्य रत्याऽपि दग्धम्मनः
कण्टकाकीर्णमार्गे पुनः प्रापितो जीवनं वञ्चनानां कथा वर्तते
।।२।।
नैव वासन्तलीला मया लोकिता कोकिलानां स्वरः कुत्रचिन्न श्रुतः
पुष्पलोकात्सदा तर्जितो वर्जितो जीवनं भर्त्सनानां कथा वर्तते
।।३।।
ज्ञानदक्षोऽपि वित्तं न वा प्राप्नुते मूर्खराजश्च हेमेषु संशेरते
स्वाभिमानं च कैर्धार्यते वाऽधुना चान्नखण्डाय हा कुक्कुरत्त्वङ्गतैः
।।४।।
हे शिव! त्वं कथं वीक्ष्य मादृग्द्विजं सर्वदा वात्मगुप्तं रहस्यप्रियं
शान्तिशस्त्यर्हपथ्यैकवृष्ट्यैषिणं नीलखात्कृष्णमेघैर्न सन्तर्पयेत्
।।५।।
.......

## १४.।। अधुना दृश्यते ।।

************

अद्य कार्यालये वाऽपि गेहे जनः
शीतभीतश्च चिन्त्यं मुदा चिन्तयन्
कम्बलावेष्टितो लेखनाचेष्टितश्-
चायपानैश्शनैरौष्ण्यगो दृश्यते
।।१।।
नव्यशोधः कुतो नव्यबोधः कुतो

नम्रतासभ्यते चापि गर्तं गते
अद्य बालोऽपि वृद्धं समाशिक्षति
शिक्षितो निर्धनश्चापणे भिक्षति
।।२।।
जीव्यतत्त्वं न जानाति यो वाऽधुना
सर्वशास्त्रस्य वै शोधकृद्दृश्यते
केवलैश्शाब्दिकाडम्बरैर्गर्वित:
पुण्यसञ्चर्बिताऽमङ्गलो दृश्यते
।।३।।
वित्तलब्ध्यै च सर्वस्समाधावति
कोऽत्र शान्त्या मुदा शङ्करं भावयेत्
किञ्च वच्मो व्यथां श्रावयामः कथां
जीवनस्य प्रथाऽन्यादृशी दृश्यते
।।४।।
शास्त्रिणो वै वयं चेति कोलाहले
ज्ञानगुप्तोऽधुना को द्विजो दृश्यते
कञ्चनाशाञ्चितो कामरागान्वितो
धावमानोऽधुना मानवो दृश्यते
।।५।।
(दिसम्बर २०१८, शीतकाले लिखितम्)

******

## १५.।। क्वाऽद्य सन्दृश्यते।।



मन्दिरे मन्दिरे नास्ति घण्टाध्वनि:

क्वाद्य शङ्खध्वनिश्चापि संश्रूयते
गोरवो गौरवो कर्ण्यते न क्वचित्
विप्रपादार्चना कुत्र वालोक्यते
??१??
शाब्दिका वैदिका वाऽपि मीमांसका
धर्मपीठाधिपा कर्मकाण्डार्थिन:
क्वाद्य तेषूत सौहार्दमालोक्यते
द्वेषदुर्भावना प्रत्यहं वर्धते
।।२।।
अद्य विद्वानपि श्रीमतां पादलिट्
सत्यपातं चरन् पक्षपाते रत:
ते समे देववत्स्युर्बहिश्चान्तरे
राक्षसाश्चाधमा भो मयालोकिता:
।।३।।
क: कविश्चाद्य वाऽपीदृशो दृश्यते
य: परस्य प्रशंसासु सम्मोदते
ते समे हा बहिस्तात् समानन्दिता:
किन्तु चित्तानि तेषां दहन्तीव वै
।।४।।
धर्मधारी क्व वाऽप्येदृशो वर्तते
कामिनीकञ्चनाशाविमुक्तश्च य:
तेऽपि वैराग्यरूपेण भोगे रता
केचिदेवाद्य भक्तौ च योगे रता:
।।५।।
भावुको वापि कश्चेदृशो भूतले
रोदितीवाऽनिशं चाऽऽत्ममित्रं स्मरन्

दूरदेशं गतो मातृभूमिं त्यजन्
कश्च वित्तं विहाय स्वगां[2] सेवते
।।६।।
हाऽद्य सर्वेऽपि वित्तस्य पाशङ्गताः
सर्वबन्धून् स्वभूमिं त्यजन्ति द्रुतं
प्रेम सौरस्यमेवं गतं क्वाऽद्य हा
केवला कूटनीतिस्समानृत्यति ।।७।।
******

लेखनसमयो दिनाङ्कश्च - ०९:३०पूर्वाह्णे, २७/१०/२०१९,

दीपावलीदिने, बहादुरगढस्थगृहे ।

------

## १६.।। अद्यत्त्वे मन्यते ।।
*************

केशवन्तः क्वचिन्नायकत्वं गता
आत्मनोऽजेय देवगन् समैर्मन्यते
केशहीना निराशावशं नैत रे
चाऽमरीशः पुरी किन्न सन्दृश्यते ।।१।।

मान्यता यादृशी श्रीयते लौकिकी
तां विहातुं जनो कोत्र वा शक्यते

---

[2] स्वभूमिमित्यर्थः ।

सा च युक्ताऽप्ययुक्तास्तु वा जीवने
कोटियत्नैस्सुबुद्धैरहो दूर्यते।।२।।

कार्त्रिमं नायकत्वं न वाञ्छन्ति के
वस्तुतत्त्वेन के नायकत्त्वं गताः
अद्य नग्नं चलच्चित्रमालोकयन्
कामुकत्त्वं गतो मानवो दृश्यते।।३।।

सभ्यतां शिक्षमाणाः जनाश्चापरे
ये बलात्कारिनिन्दां मुहुः कुर्वते
तेपि नानाविधैः कौशलैः लालना-
शोषिसम्भोगलीलारताः किं न वै ??४??

अद्य कार्यालये वाऽस्तु विद्यालये
चेच्चिकित्सालये योगशिक्षालये
कृत्रिमे वा तडागे तराणां गणे
कामनृत्यं जगत्यां दरीदृश्यते।।५।।

सुन्दरी काचिदन्याऽन्वहं वञ्चति
वित्तविद्यामनांसीव हा सन्नृणां
कश्चिदन्योऽपि धूर्तो वशीकृत्य तां
कामसौख्यं तया नूनमाप्नोत्यपि ।।६।।

------

हिमांशुगौडो
लेखनसमयो दिनांकश्च १२:४० मध्याह्ने

**०१/०१/२०२० बुधदिने।**

**-------**

## १७.।। लङ्गड़धारिपुरुषाः ।।

************

तेजस्वित्वं कौतुकत्वं विशिष्टत्त्वं तथा भवेत् ।
शिवप्रियत्त्वं यस्मिन् वै लङ्गड्धारी स उच्यते ।।१।।

संस्कृतच्छात्रदृष्ट्या वा शब्द एष प्रथां गत: ।
मोद्यैर्गङ्गाप्रसक्तैश्च नरौरानगरादिषु ।।२।।

छात्रालोके लङ्गड़ीत्त्वं कथं कस्य भवेदिति।
वदामीह यथादृष्टं चिन्तितं हर्षरूपकम् ।।३।।

आडम्बरेण वर्तेत नात्मगुप्तो प्रकाशक:।
भोज्यामन्त्रणयाः धृत्वा लम्बधौतं च यो द्विज: ।।४।।

त्रिपुण्ड्रं धारयेद्दिव्यं मध्यमायां पठेच्च य: ।
प्रभावितैरन्यबालै: लङ्गड़धारी स उच्यते ।।५।।

शास्त्रिकक्षागतो यश्च शिरोवेष्टितवस्त्रक: ।
सरेद्दैवाकरीं शैलीं स्तोत्रादीनां सुगायने ।

प्राबले प्राखरे यस्य सूच्यां नाम भवेत्सदा ।
सम्मानैरन्यबालाँश्च यज्ञं वै गमयेच्च य:।।७।।

रुद्र्या कण्ठस्थया शम्भुं नित्यं संस्नापयेच्च य:।
कौतुकैर्बहुभिर्युक्त: बलिष्ठो वा कृशोऽपि वा ।।८।।

कदाचिन्मोदमापन्नो व्याख्यानैर्य: प्रभावयेत्।
लङ्गड़ी लङ्गड़ी चाऽयं द्विजैरन्यैस्समुच्यते ।।९।।

भङ्गड़ी लङ्गड़ी चैतद्वदन्तीह जनाश्च ये ।
न ते जानन्ति जायेत वीरत्त्वेनैव लङ्गड़म् ।।१०।।

युद्धेऽपि वीरो विपदीह धीर:
शिवाभिषेकी विजयाप्रियश्च
यज्ञङ्गमी शास्त्रधरो द्विजो यो
विशिष्टवाग् लङ्गड़वान् स नान्य: ।।११।।

शास्त्रकर्मरतस्यापि दोषभ्रान्तौ परोऽवदत् -
लङ्गड़धारिपुरुषाणां कोऽपि दोषो न विद्यते ।।१२।।

श्रीगोपालाभिधो यश्श्रीत्र्यम्बकत्त्वेन कीर्त्यते।
विद्यातपोभ्यां त्यागेन लङ्गड़ी पुरुषोऽधुना ।।१३।।

श्रीदिवाकरतश्चैषा निस्सृता सत्परम्परा ।
वर्चस्वस्यैव पर्यायो लङ्गड़ं चाभिबोधयेत् ।।१४।।

विप्राणां रक्षणाद् पाठाद् विशिष्टवचनात्तथा ।
कालं स्वकं समासाद्य स्वदेशो लङ्गड़ं गत: ।।१५।।

हरिकान्तस्सदा भङ्गं जग्ध्वा गोपेश्वरोऽपर: ।
वृद्धिकेशिशिवे भक्त्या लङ्गड़त्त्वं गतावुभौ ।।१६।।

न वीरो वर्तते सोऽत्र नरेशं य: पराजयेत् ।
इत्युक्तिं सफलीकृत्य सोऽपि लङ्गड़तां गत:।।१७।।

महती लङ्गड़ीनां वै चर्या लोके निदृश्यते ।
नाम कर्म समं पश्चाद् वक्ष्याम्येतद्धि विस्तरात् ।।१८।।

-----

**लेखनसमयो दिनाङ्कश्च - १०.१३ पूर्वाह्ने, ३० अगस्त २०१९,**

स्थानम् - गाजियाबादस्थगृहे ।

----

## १८.।। महन्ताष्टकम् ।।
### (व्यङ्ग्यपरम्)

(तस्मै व्यक्तिविशिष्टाय यस्मै कूटनीतिकारिणे गुरुकुले मध्यमाकक्षादिनेषु महन्त इति पदं सहच्छात्रैरुपहासत्त्वेन दत्तम् ।)

साधारणोऽपि यश्छात्रश्चरति स्म महानिव।
मिथ्या स्वगौरवं ब्रूते ख्यातस्तस्मान् 'महन्तजी' ।।१।।

गुरुदृष्टौ स्वमाहात्म्यं वर्धयेन्नैककौशलै: ।
पैशुन्यं चान्यबालानां पीडनाय करोत्यपि ।।२।।

कूटनीतौ सदा रक्त: छात्रशोषणतत्पर:।
निन्दितस्सर्वविप्रैर्यश्चोपहास्यो 'महन्तजी' ।।३।।

वार्तामध्ये स वक्ति स्म "पङ्क्तिर्मे लगिताऽधुना"।
इत्थं स्वदौष्ट्यचातुर्यं दर्शितं च पदे पदे ।।४।।

अयोग्योऽपि तथाऽपात्रो गुरुत्वं स्वीयमिच्छति।
लहरीं यश्च गङ्गाया: कनिष्ठान् पाठयेदत:।।५।।

दक्षिणां भोजनप्राप्तामाश्रमच्छात्रहस्तगाम्।
नानोपायैर्हरेद्यश्च निन्द्यस्सोऽत्र 'महन्तजी' ।।६।।

"दीपके चाद्य यत्तैलं वर्तते ते, च तन्मम।
निष्कासनाद्धि निर्भासं जीवनं ते भविष्यति"।।७।।
निर्बलेभ्य इदं वाक्यं बलीभ्यो न वदेत्स वै ।
निद्रां नष्ट्वा सदाऽन्येषां स्वयं शेते स दुर्मतिः ।।८।।

----------------

ध्यातव्यम् -
व्यक्तिगम्या त्वियं संज्ञा यस्य पूर्वं कृता द्विजैः।
हास्यमात्राय तस्यैतच्चाष्टकं लिखितं मया ।।९।।
तत्रत्यच्छात्रवृन्देभ्यस्स्मारणं स्याद्यथा तथा।
लक्षणादिकरूपेण दुर्जनस्स महन्तजी ।।१०।।

----------------

मन्दिरस्य प्रसादं यो ह्यधिकं चात्तुमिच्छति।
अर्चकस्य पदाकाङ्क्षी छात्रैरुक्तो 'महन्तजी' ।।११।।

---------

## १९.।। दरोगाष्टकम् ।।

************

क्वचिद्दरोगा कुरुतेऽपराधं क्वचिद्धिनस्ति प्रबलापराधान् ।
न्याय्यो क्वचिद्वित्तविलुण्ठकश्च नानाविधास्सन्ति कलौ दरोगाः
।।१।।
न्यायाय दीनस्य च रक्षणाय समाजशान्तिस्थितिकारणाय
दुष्टांश्च कारागृहपातनाय विनिर्मितास्ते च नृपैः दरोगाः ।।२।।
लोके तु नैके धनलिप्सवस्ते दुष्टान्त्यजन्त्यन्यजनान् प्रगृह्य

निर्वित्तदीनान् परिपीडयन्ति नूनं हि दुष्टाः भुवि ते दरोगाः ।।३।।
असत्यसत्यं परिजल्पयन्ति ऋतं मृषा वा परिकल्पयन्ति ।
अहेश्च रज्जुः पुनरस्य सर्पं स्वधूर्तताभिः परितस्स्रजन्ति ।।४।।
केचिच्च खाकीबलतस्स्वदेशे सर्वत्र गर्वं परिदर्शयन्ति ।
नेत्रिङ्गितैश्चालितकार्यरूपाः क्वचिज्जनैर्निन्दनतां व्रजन्ति ।।५।।
उच्चापराधान् न इमे स्पृशन्ति निर्दोषलोकं परिपीडयन्ति ।
उच्चाधिकारीङ्गितचालिताश्च कथं स्ववृत्तिं परियापयन्ति ।।६।।
न वेतनैस्तोषमिमे प्रयान्ति चोत्कोचवित्तैश्च सुतुष्टरूपाः ।
असौ तु साधारणधर्म एषां उत्कोचमोदं क्व जनास्त्यजन्ति ।।७।।
कलङ्कतामेति सदैव वेशः[3] एषां चमत्कारसुविस्मिताश्चेत् ।
यदा प्रकाशं परियान्ति चैषां दोषास्तदा धिक्कृतिभाज एते ।।८।।
लेखनकालः – सन् २०१५

-------

## २०.।। अद्यतने शोधलीला ।।

❋❋❋❋❋❋❋❋❋

गोखुरीं यश्शिखां धृत्वा मठे वाऽऽप्याश्रमे वसन्।
वेदपाठे सदा रक्तः श्राद्धभोज्येषु गच्छति।।१।।
संस्थाने सोऽपि चागत्य छात्रवृत्तिमवाप्य च।
धूम्रचुल्लीं च चायञ्च पिबेन्मित्रैस्सहापणे।।२।।

---

[3] एषामारक्षकाणां वेशः मृद्वर्णीयः।

कदाचित् शोधकक्षायामागतो विप्रतल्लजः
अहर्निशं शयानोऽपि कथं शोधं करिष्यति।।३।।
अस्मच्छोधप्रबन्धं वा लिखेच्चेच्छाब्दिको द्विजः।
पञ्चाशतं सहस्रं वै तस्मै यच्छामि चादरात्।।४।।
रे रे वीक्षक सावधानमनसा किञ्चित्क्षणं श्रूयताम्
शोद्धारो बहवो भवन्त्यनुदिनं सर्वेऽपि नैतादृशाः
केचित्स्वप्रतिभाबलादथ परे ग्रन्थस्य चोट्टिप्पणैः
यं यं पश्यसि शोधकं हि दयया तं तं कुरु डॉक्टरम् ।।५।।
गाहन्तां कुधियोऽनुवर्षमिह वा चेच्छात्रवृत्त्यम्भसि
ग्रन्थाबद्धकदम्बकं द्विजकुलं चौर्यं समाचर्यताम्
विश्रब्धं क्रियताञ्च शोधकजनैः पेष्टं कटं[4] यत्नतः
विश्रामं लभतां च पुस्तकमिदं जाताः वयं डॉक्टराः[5]।।६।।
शोधक्षेत्रे च संस्थासु विभागेषु समेष्वपि ।
निर्देशकाश्च शोद्धारः किमकुर्वत सञ्जय।।७।।
राजश्रीचर्वणे रक्ताः पल्सरेण भ्रमन्ति ते।
दिवसे पञ्चवारं वै चायपास्ते गवेषकाः।।८।।
यथा गावश्चरन्त्यो वा भक्षयन्त्यौषधं मुहुः।
तासां दुग्धं न केषां स्यात् बलबुद्धिप्रवर्धकम्।।९।।
तथा गवेषकाश्चैते नानास्थानेषु चायपाः।
तेन तथ्यं समाचिन्त्य शोधबन्धं लिखन्त्यपि।।१०।।
यदा यदा हि शोधाय मनो मे कुरुतेऽर्जुन।
अन्यचौर्यं[6] विधायाऽहो द्रुतं शोधं लिखाम्यहम्।।११।।

---

4 कट पेस्ट इत्येतौ आङ्ग्लभाषाशब्दौ कविनाऽत्र व्यङ्ग्याय प्रयुक्तौ ।

5 डॉक्टर इत्याङ्गलशब्दोऽपि कविना व्यङ्ग्यवशादत्र लिखितम् ।

तथ्यचौर्येऽधिकारस्ते मा शोधेषु कदाचन।
मा स्वशोधाय हेतुर्भूः मा ते सङ्गोऽस्तु लेखने।।१२।।
----

## २१.।। नेता भव ।।



न वा पठ त्वं न च वा लिख त्वं
कविर्न विद्वानथवा भव त्वं
मित्राऽद्य वाचं मम धारय त्वं
समैश्च यत्नै: नेता भव त्वम् ।।
।।१।।
सुशिक्षितश्चेच्च महाश्रमैस्त्वं
प्रशासनस्योच्चपदं प्रयासि
तथापि तस्यैव निरक्षरस्य
नेतु: पुरो दास्यमिवाचरे: रे।।
।।२।।
वृत्ति: (दास्यं) प्रदद्याद् यदि किं प्रदद्यात्
स्वल्पं हि वित्तं महतीं च चिन्तां
शाकाय वा तल्लवणाय वा तत्
नेतृत्त्वकार्येण महाधनानि ।।
।।३।।

[6] अन्यग्रन्थचौर्यं विधाय तं स्वमतमिति विख्याप्य इत्यर्थः। आङ्ग्लभाषायां Cut Pest इति कृत्वा ।

वीरोऽपि विद्वानथवा गुणी स्यात्
सुकल्पनाकारकविश्च वा स्यात्
आजीविकामेतुमिमे समेऽपि
द्वारे सुतिष्ठन्ति सदैव नेतु:।।
।।४।।
नेतृप्रसादात् कुकवि: कुशील:
स कालिदासादपि सूच्चगण्य:
न मन्यते कैरपि सभ्यवर्गै:
महाकवि: नेतृसुदृष्टिहीन:।।
।।५।।
नेतृप्रसादाज्जयताद् रिपूँश्च
नेतृप्रभावाल्लभतां सुवृत्तिं
सिद्धानि कार्याणि सदैव पुंसां
ये नेतृमित्रत्त्वमहो व्रजन्ति ।।
।।६।।
असत्यभाषी कपटी कुशील:
सामान्यजानादपि गुप्तलीला
न त्यज्यते तेन कदापि शीला
स भोगवान् त्वं भव नेतृगुण्य:।।
।।७।।

---

लेखनसमयो दिनाङ्कश्च – १२.१० रात्रौ , २८-०७-२०१९,
गाजियाबादस्थगृहे ।

-------

२२.।। अहं बिहारी ।।

❋❋❋❋❋❋❋❋❋

दु:खाद् बिभेमीह न च लेशमात्रं
सर्वत्र चैवं विचरामि मोदै:
कर्णाङ्गदेशे भुवि भारतेऽस्मिन्
सदाऽऽप्तलक्ष्य: प्रथितो 'बिहारी' ।।१।।

बसाख्ययानेऽपि च रेलयाने
पूर्वोत्तरे वा शुभरम्यदेशे
भ्रमामि निर्भीकवपुस्ससङ्ख्यो
जनैस्सदाऽहं कथितो 'बिहारी'।।२।।

मुखे च ताम्बूलकृता सुशोभा
ष्ठीवामि चेतस्तत एमि यत्र
विशिष्टशैल्यैव करोमि वार्तां
जनै: प्रसन्नै: कथितो बिहारी।।३।।

अङ्गोक्षवस्त्रं हि सदा गलेन
स्वेदाद्यपाकर्तुमहं निवेष्ट्य
यत्रापि गच्छामि विशिष्टकार्यै:
स्ववस्त्रशैल्या प्रथितो बिहारी।।४।।

दरिद्रतादग्धमहो मदीयं
जीव्यस्य याथार्थ्यभृतं च चित्रं
सदाऽनुभूय स्वमहत्त्वमद्धा
श्रद्धा विवृद्धाऽस्ति महाश्रमे मे।।५।।

वदन्ति ये दुष्टजनो बिहारी
कुर्यान्न तेनैव कदापि मैत्रीं
ते नैव जानन्ति पुरा बिहारे
कर्णाङ्गराजा ह्यपि सम्बभूव ।।६।।

न केवलं चैकजनं हि दुष्टं
दृष्ट्वापि कुर्याच्च बिहारिनिन्दां
यश्चाभिनेतृत्त्वगत: प्रशंस्यो
जानाति को नाऽद्य च तं गुविन्दाम्[7] ।।७।।

शङ्क्या हि लोके यदि निस्स्वताऽस्ति
ह निष्प्रतापेति च शूद्रकोक्तिं
सत्यार्थरूपैश्चरितार्थयेद्य:
स सज्जनैर्वै कथितो बिहारी।।८।।

शास्त्रं निधायापि हृदि स्वकीये
सरस्वतीपादरतास्सदैव

[7] गोविन्दाख्यमभिनेतारमित्यर्थः, छन्दोवशात् गोविन्देत्यस्य गुविन्देति कृतः ।

सतां वरा: वा विदुषां वरा: वा
बिहारदेशस्य विभान्ति लोके।।९।।

मत्स्यं भवेदोदनसंयुतं च
स्थाल्यां हि जम्बीररसेन युक्तं
प्रियं सुभोज्यं परिलोक्य नूनं
जगत् समं विस्मरताद् बिहारी।।१०।।

मनोज इत्यत्र च वाजपेयी
जातोऽभिनेताऽभिनयेन नूनं
जनप्रियस्स्वप्रतिभाबलेन
खेसारिलालं नहि के विदन्ति ।।११।।

के 'लोलिपोपा'ख्यमहो न गीतं
देशे विदेशे परिगीयमाना:
नृत्यन्ति हृष्यन्ति रवन्ति रात्रौ
विवाहकाले 'पवन'स्वरेण।।१२।।

ओझेति चात्रैव पदप्रवीण:
शास्त्रार्थिनामग्रगतस्सुमान्य:
काश्यामधीत्यापि स रामयत्नात्
यशो जगत्यां तनुतेऽन्वहं च ।।१३।।

----------

लेखनसमयो – ११ जुलाई, १०-०८ रात्रौ । गाजियाबादस्थे गृहे ।

------

## २३.।। यवनदौष्ट्यम् ।।

*********

ये भारते स्वविभुतां परिकाङ्क्षयन्ति
ये स्वीयजातिजनवर्धनतत्पराश्च
ये मूर्तिपूजकजनस्य विरोधिनो वै
ते भारतं मम, दहन्ति रुषा समन्तात् ।।१।।

येऽन्यं न धार्मिकजनं कुजनास्सहन्ते
शुद्धं सनातनमहो परिणष्टुकामा:
ये कौक्कुटाजमहिषादनकद्विमर्शा:
हिंस्रास्तु भारतमिदं परितो दहन्ति ।।२।।

ये चेह भारतभुवोऽमितशाहपुत्रं
श्रीमोदिनं प्रमुखमन्त्रिवरं नरेन्द्रं
निन्दन्ति, सर्वजनताप्रियदेशपूज्यं
दिल्लीं दहन्ति कुजना अधुना त एव ।।३।।

एते सदा स्वहृदयैः यवनैकमित्राः
इच्छन्ति हिन्दुहननं सततं समन्तात् ,
सर्पे तथैव यवने क इतोपि वर्यः
सर्पात् सहस्रगुणितो यवनो ह दुष्टः।।४।।

ये लुण्ठकाश्छलयुताः मलिनाः दरिद्राः
निघ्नन्त्यपि स्वपितरं नितरां कृतघ्नाः
पुत्र्या रमन्त उत ये सह हा भगिन्या
तेषां हि दुष्कृतगणान् कथनेस्म्यशक्तः ।।५।।

सर्पाक्षरीमिव लिखन्ति लिपिं जना ये
ये मस्ज़िदाख्यभवने च चरन्ति पूजां
आतङ्कपाठनरताश्च भवन्ति मुल्लाः
बाल्ये विषं मदरसाख्यगृहे भरन्ति ।।६।।

भ्राता निकथ्य छुरिकामपि घोपयन्ति
आतङ्कवादिवपुषं बत गोपयन्ति
विश्वस्ततां च परियाय चरन्ति घातं
को वा परोऽस्तु यवनादधिको ह नीचः।।७।।

----

लेखनकालो दिनाङ्कश्च -०७/३० दिनान्ते।

१७/१२/१९

-----

## २४. कथं नववर्ष:?

**********

वासन्तमोदरहितः खलु शीतकालो
नाऽऽलोक्यते शतकरो दिवसेऽपि पूर्णे
स्रंसन्ति सर्वजनतासुतनूंषि यत्र
स्यान्मे कथं वदत मङ्गलनव्यवर्ष:??१??

नृत्यन्ति पीतमदिरोन्मदघूर्णिदेहा:
यद्वार्धरात्रिसमये तमसावृतास्ते
ते म्लेच्छदेशिमलिना व्यभिचारसक्ता
तद्वत्कथं भवतु मेऽपि नवीनवर्ष:??२??

मासेऽप्यृतौ न परिवर्तनमद्य किञ्चित्
स्रंसन्ति सर्वजनताह्यपि शीतकोपात् :
वृक्षेषु पत्रनवता न खगेषु हर्ष:
एवं कथं ह नवमङ्गलहीनवर्ष:??३??

स्नानादिकं च कठिनं भ्रमणं च यात्रा
विद्यालयान्न समये समयन्ति बाला:

एतन्निरीक्ष्य कृतवानवकाशकल्पां
तस्यां स्थितौ कथमिवास्तु नवीनवर्ष:??४??

आरम्भकाल इव भाति न सुप्रकृत्यां
वैशिष्ट्यहृष्टिरिव नैव यदा जगत्यां
नव्यत्त्वमन्विषतु चेच्च महाप्रयत्नै:
मूढ त्वदर्थमिह सोऽस्तु !विकम्पिवर्षं!!५!!:

चेच्चिन्तयेद्यदि जगज्जनताः वदन्ति
मन्यामहे सकलविश्वकुटुम्बिचित्ता:
किं चाङ्ग्लदेशजनता तव चैत्रमासे
मन्येत वा निजमथो शुभनव्यवर्षम्??६??

आङ्ग्ला क्वचिद् ददतु वा नवनव्यतर्कं
हेतुश्च कस्त्विति न तेपि विदन्ति तथ्यं,
म्लेच्छानुगा न भवत प्रियदेशिनो मे
चैत्रे भविष्यति हि नो नववर्षमोद!!७!!:

*****

लेखनकालो दिनाङ्कश्च – रात्रौ ११-५८, ०१/०१/२०२०
गाजियाबादस्थगृहे ।

# २.॥ द्वितीया वल्लरी ॥
# (गीतानि)

## २५.।। तानि दिनानि ।।

✽✽✽✽✽✽✽✽✽✽✽✽✽✽

विंशवर्षनवयौवनकाले मित्रैस्साकमहो भ्रमणानि
क्वचिच्चायधूम्रपानानि नूनं नस्तन्मोददिनानि ।।१।।

नूतनानि ननु नृत्यदिनानि वर्षति[8] चैव स्नानदिनानि
घर्मैर्वा परितप्तदिनानि प्रियां नवामन्वेष्टुमहानि ।।२।।

---

[8] वर्ष शतृ ङि । बारिश में स्नान करने के दिन थे – इत्यभिप्रायः ।

रम्भोरूपरिरम्भदिनानि शान्तसरित्तटसम्प्राप्तानि
शारदानि शीतांशुयुतासु रजनीषु स्मररावकराणि ।।३।।

पुनर्जीवनेऽसम्प्राप्तानि नवयुवतीभिर्मान्मथानि
रसनिश्च्योतत्तन्वीचर्चा-चर्चिसमालिङ्गनसक्तानि ।।४।।

किम्महदाश्चर्यन्नो मनस्सु किञ्च पुनः प्रसरेज्जगतीषु
नव्यवयोयौवततृप्तानि स्मरशरघर्मातप्तदिनानि ।।५।।

वासन्ते स्मर! पुष्पधनूंषि धृत्वा, पञ्चशरैश्च मनांसि
विध्यति, लोके नव्यतनूंषि उद्याने रतसौख्यदिनानि ।।६।।

छात्रे काले बहुव्याजैर्वा सहपाठिन्या सहोल्लपितानि
सुप्ते सर्वजनेऽथ निशीथे छदिसि तया मेलनसक्तानि ।।७।।

अस्माकं तु गङ्गाक्रोडे कूर्दतरणगाहक्रीड्यानि
भाष्यपङ्क्तिचिन्तनचित्तानि गौरुकुलानि श्रेष्ठदिनानि ।।८।।

रूद्रपाठजरीहृष्टानि नानाशास्त्रधर्मजुष्टानि
आचारैः पुनराक्लिष्टानि मखादिकर्मव्रतशिष्टानि ।।९।।

......

## २६.।। आनन्दजीविनो वयम् ।।



आनन्दजीविनो वयम् -२....
दासत्त्वं कस्यचिन्नो याम किंचित्
ह्रासत्वं प्राप्नुयामो नैव कैश्चित्...
हर्षरूपैः क्वचित् खेलमग्नाः
शान्तरूपै: क्वचित् सुस्थरूपा:----
आनन्दजीविनो वयम् -२ ....
।।१।।
जीवनस्य नौरियं संसारसागरे
वहताद्वा सह तरङ्गैः निमज्जेद्वा वारिमध्ये
न स्याम व्याकुलाः धीरत्त्वं गामिनः
आनन्दजीविनो वयम् -२....
।।२।।
स्वेच्छाभिर्जीवनं यापयेम,
नो पराधीनतां संव्रजेम...

हरिं केवलं संस्मराम:
नैव काठिन्यमार्गे संसरेम,
आनन्दजीविनो वयम् -२ ....
।।३।।
श्वासविश्वास एवापि नास्ति
कस्यचिच्चात्र पृथ्व्यां नरस्य,
तर्हि व्यर्थं किमर्थं हि युद्धं
धावनं वा धनार्थं किमर्थं...
आनन्दजीविनो वयम् -२....
।।४।।
नाभिमानं वृथा चात्र कुर्यात्
नैव द्रोहो न द्वेषोऽपि धार्यो
अल्पजीव्ये समैश्चैव प्रीति:
धारयेच्चात्ममोदे प्रमग्न:
आनन्दजीविनो वयम् -२.....
।।५।।

लेखनसमयो दिनांकश्च -१२-१० रात्रौ, २७-०५-२०१९
स्थानम् - गाजियाबादस्थगृहे।
------

## २७.।। तनुध्वम् ।।



मतिश्शिवे शिवदे शुभमार्गे शोकहरे प्रकुरुध्वम्
श्रौतं शास्त्रं चैव पुराणं गुरोर्मुखाच्चाऽधीध्वम्
दिव्यैः कर्मभिरभ्रमण्डलैरिव गगने शोभध्वम्
सर्वं यशस्करं सुखलोकं बुद्धाः द्रुतं तनुध्वम् ।।१।।

श्रीमाँल्लोकनिवासनायकश्श्रीविष्णुस्स्वकृपाभिः
यं मानुषमणिमहो पुनाति जगत्सुपोषणकारी
तस्य मङ्गलं लोकमङ्गलं वीक्ष्य जनाः मोदध्वम्
विष्णौ तस्मिन् पापनाशिनि मनो जनाः वर्तध्वम् ।।२।।

गङ्गावारितरङ्गसुहर्षनिकर्षमहो प्राप्नुध्वम्
अभिसिञ्चत वा शङ्करलिङ्गं पुण्यं तेनापि लभध्वं
नाकगो भवेद् यस्य पूजया तं देवं सेवध्वम्
लोकमेत्य जनास्तेजोभिश्शैवे चाऽप्येधध्वम् ।।३।।

-----

लेखनसमयः – सितम्बर, २०१५

## २७.।। दीपावली स्वागता ।।

✽✽✽✽✽✽✽✽✽✽✽✽✽✽

दीपावली स्वागता----२

गणपतिपूजां लक्ष्मीपूजनं करोतु चास्यां श्रद्धया,
शास्त्रविधिं ज्ञात्वा विद्वद्भिः, करोतु मोदिन्! निष्ठया,
दीपावली स्वागता----।।१।।
रङ्गरञ्जितं कुरु निजगेहं,
शुद्धं मङ्गलं कुरु च नूतनम्।
देहे नव्यवस्त्रं धृत्वा, गायतु मोदितचित्तः-
दीपावली स्वागता---।।२।।
पश्य मङ्गलं परितो दिक्षु, सर्वे मोदनतत्पराः।
धर्मयुतो भव कर्मयुतो भव सर्वे पूजनतत्पराः।
लक्ष्मीप्राप्तिः द्रुतं भविष्यति, विश्वस्तो भव मानव!
दीपावली स्वागता----।।३।।
अस्मच्छास्त्रपुराणकथाभिः ज्ञायत एतद्विषये,
लक्ष्मीदात्री दुःखनाशिनी, दीपावली पुण्यदा,
दीपावली स्वागता---।।४।।
आपणकाः वीथयश्च व्याप्ताः, नानादेवसुचित्रैः।
मिष्ठान्नं खादन्ति सर्वे, ध्वनिपूर्ण आकाशः।।
भासन्तेऽद्य चतुर्दिशो वै, कुरूपकारं चास्यां
दीपावली स्वागता----।।५।।
लक्ष्मीपूजया लक्ष्मीकृपया लक्ष्मीवृष्ट्या स्नान्तु,
सौख्यकरीयं वित्तकरीयं, दीपावली समागता
दीपावली स्वागता-----।।६।।

लेखनसमयः – २०१७ ख्रिस्ताब्दस्य दीपावल्याः सप्तदिनेभ्यः पूर्वम्।

-------

## २८.।। प्रवहति गङ्गा ।।

✻✻✻✻✻✻✻✻✻✻✻✻✻✻

अमृततुल्या जलधारा प्रवहति गङ्गा
पापनाशिनी पुण्यदायिनी प्रवहति गङ्गा
भारतसंस्कृति-मार्गदर्शिनी कलिमलनाशिनी
सर्वपुरातनधर्मवर्णिता माता गङ्गा ।।१।।

मैनां दूषय मैनां शोषय, रक्षय भूरिप्रयत्नैः
मलं च मूत्रं मा विसर्जय, शोधय चैनां यत्नैः
यदि न स्यात् नो माता गङ्गा, न स्याद् भारतकल्पा
गङ्गां विना न संस्कृतिरक्षा, सेयं स्वर्गप्रकल्पा।।२।।

विष्णुपदाब्जविनिस्सृतरूपा, शङ्करजटानिवासा
भगीरथस्य तपःफला, पृथिवीं प्राप्ता श्रीगङ्गा

हिमालयात् प्रारब्धा सैषा, पतति च सागरमध्ये
देवनदीयं, भारतप्राणा, रक्षय मानव ! गङ्गाम् ।।३।।

नमामि गङ्गां, ध्यायामि गङ्गां, सङ्कल्पं च करोमि
न दूषयामि, न शोषयामि, न बन्धयामि कदापि।।४।।

धनपिशाचा: प्रतिदिनमस्यां क्षिपन्ति दुष्टपदार्थान्
देशामूल्यनिधे: रक्षायां विफलाः हा नेतार:
सर्वे स्वार्थवशीभूताश्चेत्, कथमिव गङ्गारक्षा
वयं प्रणं कुर्मो यदि सर्वे, भविता गङ्गा स्वच्छा।।५।।

.......

(लेखनसमयः – सितम्बर, २०१६ )

..............

## ३०.।। संस्कृतज्ञयुवक-विडम्बना ।।

*************

( सर्वकारीयवृत्तिविहीनानां साधारणसंस्कृतज्ञयुवकानां विडम्बनाज्ञापनम् )

❁❁❁❁❁❁❁❁❁❁❁❁❁❁

काचिन्नवीनयोषा , पाणिग्रहाय मह्यं
नो दीयतेऽपि कैश्चिद् , वृत्त्याऽस्म्यहं विहीन:
बत सर्वकारवृत्ति-र्लब्धा न वा मयाऽद्य
साधारणाऽपि मां नो, पश्येत्क्वचित्स्मराढ्या
।।१।।

परिणेतुमर्थहीना , बाला च मां कदाचित्
साकं स्वकेन पित्रा, दैवाच्च चेदुपेता
सा वीक्ष्य मां, स्वजनकं,प्रतिवक्ति वाक्यमेतत्
'ऋतिको' न चायमस्ति नामुं त्वहं वृणोमि
।।२।।

कुलगौरवात् कदाचिच्चायाति मां च दृष्टुं
कन्यापिता गृहे मे, रोचेऽपि चेच्च तस्मै,
दुष्टा अनर्थकामा: प्रतिवेशिनो मदीया:
कन्यापितुश्च कर्णौ निन्दाभिराभरन्ति
।।३।।

नगरस्य काचिदन्या कन्या विवाहकामा
'विद्याधिवारिधि'र्वा वर आनिशम्य गेहे
दृष्टुं हि मत्कुटुम्बं वदनं तथा मदीयं
पित्रा समं ह्युपेता, जीन्सादिधारिणी सा
।।४।।

चित्ते हि लड्डुकानि भिन्नानि तां विलोक्य
हो 'आलिया'स्ति मन्ये, आङ्ग्लैकभाषिणी सा

लज्जां न वाऽऽचरन्ति, प्रणयप्रदानकाले
इत्थं सदोत्तमास्ता नानासनास्समुक्ताः
।।५।।

किन्त्वन्यदेव तत्र , धातुर्विचार आसीत्
तद्-योषिता-कुचित्ते वृद्धस्त्वहं समाऽऽसं
दृष्ट्वा शिखां मदीयां , दृष्ट्वा च धौतवस्त्रं
श्रुत्वा च संस्कृतेन , सम्मिश्रितां सुहिन्दीम्
।।६।।

अयमस्ति संस्कृतज्ञो, मूर्खाश्च ते भवन्ति
पूजां च कारयन्ति, पाण्डित्यमाचरन्ति
जानन्ति नैव नव्यां चाङ्ग्लीं सुपद्धतिं वै
मम योग्य एष नास्ति, नो सर्वकारिवृत्ति:
।।७।।

इत्थं स्वकीयभावान् , स्वमुखेन बोधयन्ती
सा मस्तके स्वकीये, हस्तं निधाय रुष्टा
वक्ति स्वकीयपितरं, मद्-धिक्कृतैकवाचा
नानेन सह विवाहो, मरणेऽपि भो पित:! मे
।।८।।

नैवं च संस्कृतज्ञा वृणुतेऽपि संस्कृतज्ञम्
साऽपीच्छति नवीनं जीन्सादिधृद्-युवानं
आग्लीं प्रभाषमाणं इंगलेण्ड आवसन्तं

लक्षं मितं भवेद्वा चेद् वेतनं च तस्य
।।९।।

स्यादुन्नति: कथं वा सुरवाच एवमद्धा
चाधीत्य यां विवाहो न, भवेद् , युवा च वृद्ध:
यदि संस्कृतज्ञकन्या सुरवाक्सुयुक्तपुंसा
कुर्यान्-मुदा विवाहं स्यात्-सर्वसौख्यलब्धि:
।।१०।।

खल्वाटतां प्रयामि, च स्थूलतां प्रयामि
स्वकुटुम्ब-बन्धुवाचा, च न्यक्कृतिं प्रयामि
पश्यन्ति नैव योषा:, मदनेङ्गितै: क्वचिन्माम्
वित्तादिहीनजीवो, जीवन्नपि म्रियेत
।।११।।

लेखनसमयो दिनाङ्कश्च – ५.२८ सायङ्काले , २६ जून,२०१९

## ३१.।। लवङ्गीं कुरङ्गीम् ।।

✻✻✻✻✻✻✻✻✻✻✻✻✻✻

पुनर्वा लवङ्गीं कुरङ्गीं समीहे
पुनः पण्डितश्री-पथं यातुमीहे
पुनः काशीविद्वत्समाजस्य दृष्ट्या
पतित्वा पवित्रास्तुतिं कर्तुमीहे ।।१।।

पुनो ब्रह्मचर्योच्छलत्तेजसा वा
महासुन्दरीं यावनीं लब्धुमीहे
पुनः कस्यचिद् भट्टमित्रस्य विद्वन्
कृतेष्टीकया कुचौ लब्धुमीहे[९] ।।२।।

क्वचिच्छान्तशम्भ्वालये बिल्वपत्रै:
शिवस्यार्चनं कर्तुमीहे सुमैश्च
तपोभिस्स्वकीयैः पुनस्सूर्यलोकं
क्वचिच्छैवलोकं तथाप्तुं समीहे।।३।।

मुधा तृष्णया धावमानो धनार्थं
स्वभावेन संसारलाभी जनोऽस्मि
न जानामि विद्वन् सदा भ्रान्तरूपो
ऽप्यहं जीवने किं किमाप्तुं समीहे ।।४।।

-----------

## ३२.।। नरवरे हरहरस्सर्वदा श्रूयते ।।

✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲

९ कुचौ मर्दयितुमीहे इति तात्पर्यम् । अत्र छन्दःपारवश्यात् कुचौ लब्धुमिति कृतः । पूर्वं कुचप्राप्तिः पश्चादेव तन्मर्दनसुखं सम्भवमित्याशयेन तदपि साधुः। यथा पण्डितराजेन प्रौढमनोरमायाः कुचमर्दिनीटीका कृता तथैवाहमपि पाण्डित्यप्रकर्षमेतुमीह इति श्लोकभावो बोध्यः ।

कुत्रचिद्वेदपाठः क्वचिन्मङ्गलम्
शास्त्रचर्चा क्वचिद्वा क्वचिद्याजनम्
कल्मषं चात्र वै सर्वथा धूयते
नरवरे हरहरस्सर्वदा श्रूयते ।।१।।

अत्र गङ्गाजले स्नानमाचर्यते
शङ्करस्यार्चनं विष्णुपूजाऽथवा
सान्ध्यकर्मापि सर्वैस्समाश्रीयते
नरवरे हरहरस्सर्वदा श्रूयते ।।२।।

अत्र पातञ्जलं कैयटोक्तिस्तथा
नागभट्टस्य चोद्योतटीकार्थनम्
प्राप्यते, हर्षवाग्भिस्तपश्चर्यते
नरवरे हरहरस्सर्वदा श्रूयते ।।३।।

श्रीलबाबामुखात् सर्वशास्त्राण्यपि
वेदवेदान्तवाक्यानि बोद्धुं मुदा
दूरदेशाज्जनैरत्र चागम्यते
नरवरे हरहरस्सर्वदा श्रूयते ।।४।।

कर्मकाण्डप्रवीणाः द्विजाः भान्ति वा
यज्ञकारिद्विजाः विज्ञतापादका:
अत्र सर्वत्र सर्वं सुखं दृश्यते
नरवरे हरहरस्सर्वदा श्रूयते ।।५।।

किं ब्रवामाऽधिकं यच्च भूमा सुखं
शान्तिमार्गाश्रयस्स्वल्पतुष्टिश्च वा
स्थानमेतत् शमादिप्रदं दृश्यते
नरवरे हरहरस्सर्वदा श्रूयते ।।६।।
.........

## ३३.।। नाथूरामो गोडसे ।।

✽✽✽✽✽✽✽✽✽✽✽✽✽✽

यश्च मृत्त्वाऽपि देवत्त्वमाप्तः
भारते हृत्प्रदेशे सुशेते
योऽत्र सामान्यनॄँश्चाऽतिशेते
गोडसे नाथुरामो विजयते.....२
नाथुरामो गोडसे .....नाथूरामो गोडसे .....
।।१।।
राष्ट्रभक्तौ सदा दत्तचित्तः
राष्ट्रहेतुस्सदा दत्तवित्तः
राष्ट्ररक्षार्थमेवं स्वप्राणान्
त्यक्तवान् गान्धिनं यश्च हत्त्वा
नाथुरामो गोडसे .....नाथूरामो गोडसे
।।२।।
स्यान्न चेद्धारते नाथुरामः

नैव दु:खेभ्य आप्यो विराम:
साहसी सद्गुणी चैव साधु:
भारतत्राणकरी स नाथू
नाथुरामो गोडसे ....नाथूरामो गोडसे .....
।।३।।
वित्तचिन्ता न वा प्राणचिन्ता
येन धत्ता सदा देशचिन्ता
देशभक्तोऽमरोऽसौ युगेभ्य:
धूर्तगन्धासुरं चैव हत्त्वा
नाथुरामो गोडसे ....नाथूरामो गोडसे .....
।।४।।
भारतस्याऽपि दुर्भाग्यमद्धा
पश्यतादद्य लोकोऽक्षिमांश्चेत्
देशभक्तस्स वै देशद्रोही
घुष्यते राजनीत्यै च दुष्टै:
नाथुरामो गोडसे....नाथूरामो गोडसे .....
।।५।।
चन्द्र आजाद एवं हि वीरो
प्राणदो वा भगत्-सिंहधीरो
तद्वेषोऽपि सर्वैस्सुमान्यो
घुष्यतां दिक्ष्वहो नाथुराम:
नाथुरामो गोडसे ....नाथूरामो गोडसे .....
।।६।।
लब्धवान् सद्य य: कृष्णधाम
गान्धिघातेन य: पूर्णकाम:
भारतीरक्षणे नव्यराम:

सोऽमरो गीयते नाथुराम:
नाथुरामो गोडसे...नाथूरामो गोडसे .....
।।७।।
-------

## ३४.।। कामये श्वेतकरवीरगन्धाम् ।।

✲✲✲✲✲✲✲✲

सुधामेघसंवर्षिणीं माधवाढ्यां
मान्मथे स्वप्नलोके च मामाह्वयन्तीं
गौरवर्णां हरिच्छाटिकाभूषिताङ्गीं
कामये षोडशीं श्वेतकरवीरगन्धाम् ।।१।।

कञ्चनाभां क्वचिच्चेङ्गितैराह्वयन्तीं
पाटलौष्ठीं क्वचिन्मद्यमत्तां हसन्तीं
सरन्तीं क्वचिल्लज्जयाऽप्यपसृताङ्गी
लयन्तीं ममाङ्के कामभीकम्पिताङ्गीं
नवोढां हितां कामये कुन्दगन्धाम्.....।।२।।

नृत्यसक्तां स्मराख्ये रणे दक्षयोद्ध्रीं
कामचेष्टाङ्गणे क्रीडनार्थां सुबोद्ध्रीं
नव्यलीलालये योषितां चित्रिणीं वा
कामये तां रसज्ञां श्वेतकरवीरगन्धाम्....।।३।।

शुभ्रनेत्रां मधूनीव वाचा स्रवन्तीं
मङ्गलानीव च श्रावणे संरवन्तीं
तां समीहे क्वचिद्भाग्यलब्धां विदग्धां
कामये श्वेतकरवीरगन्धां विलब्धाम् ।।४।।

वृष्टिकामार्तरूपां सुरूपां प्रियां
ताञ्च हिल्लोलप्रीतां विनीतां श्रियाम्
अम्बुधारां, विहारार्थिनीं रक्तवस्त्रां
कामये स्वप्नगन्धां , श्वेतकरवीरगन्धाम् ।।५।।

**लेखनसमयो दिनाङ्कश्च - ११.१६ पूर्वाह्णे, ५ अगस्त २०१९, गाजियाबादस्थे गृहे ।**

............

## ३५.।। जनपदो गाजियाबादोऽयम् ।।

************

क्वचिच्चापणैः क्वचिद्वनैश्च संव्यापृतो विभाति ,
क्वचिच्च यानैः क्वचिच्च मार्गैः जनताकीर्णश्चायम् ।।१।।

नगरे बहुप्रदूषणमत्र ग्रामे शुद्धा वायुः
कठोरभाषा, सरलं हृदयं, प्रायोऽत्रापि निदृश्यम् ।।२।।

यदा हि रुष्टो भवेज्जनोऽत्र शतशो वै म्रियन्ते
मैत्रे वा शात्रवे तथापि जीवनानि जीर्यन्ते ।।३।।

गोलीवृष्टि: भवेद्यदा को गणयेन्मृतकवपूंषि
जीविता उत रोषाग्नौ दह्यन्ते शत्रुतनूंषि ।।३।।

फौजीसतबीरौ न को जनोऽत्र रिपूत विवेत्ति
विडम्बना-शात्रवमापन्नौ राजनीतिगतधूर्तैः ।।४।।

वञ्चना न हृदयेषु नृत्यति, यत्क्रियते तत्साक्षात्
अत: प्रेम घृणाभावो वा दृश्येताऽत्र विगुप्त: ।।५।।

पुरा महारणभूर्विज्ञाताऽधुना च शान्तजनाय:
विकसितदेशो विकसितवेशो जनपदो गाजियाबादोऽयम् ।।६।।

.........

# ३.।। तृतीया वल्लरी ।।
# (मुक्तकगद्यकाव्यानि)

## ३६.।। मद्देहे विकसिता वल्लरी ।।

❋❋❋❋❋❋❋❋❋❋

मद्गेहे विकसिता वल्लरी काचित्
मेघान् वीक्ष्य नर्तिता मयूरी काचित्
किं ब्रवाणि जीवनकथां मित्र!
हृदये पुनर्जागृता वेदना काचित्

।।१।।

सोमश्रावणेऽद्य ग्रामस्थमन्दिरे
बिल्वपत्राणि शिवाय दत्तानि
जीवनेऽस्मिन् सौभाग्योदयाय
शुभान्यद्यैव मया धत्तानि

।।२।।

खट्वामारूढ: पुनर्जाल्म: कश्चित्
पट्वीमारूढो पुनराल्म:[10] कश्चित्
जलानि तेन घट्टघट्टानां पीतानि
फलानि तेन हट्टहट्टानां नीतानि

।।३।।

स स्वशिखां बद्ध्वैव काव्यानि कुरुते
न सर्वेषां समक्षं स्वभाव्यानि ब्रूते
स कोटिभिर्वर्षैश्शिवप्रतीक्षणरत:
पुराणानां सदैव समीक्षणरत:

।।४।।

अद्य स्वीयं ग्रामं प्राप्यापि मोदते किञ्चिदेव
यथा केवटो राममाप्यापि हर्षेत् किञ्चिदेव

---

10 आ अल् – आल् तं मातीति आल्मः – विद्वान् ।

**यथा कैय्यटो वा प्रदीपं प्रदीप्यापि अल्पतुष्टिमियात्**
**मम्मटो वा काव्यप्रकाशैरल्पप्राकाश्यमयेत्**

॥५॥

**लेखनसमयो दिनाङ्कश्च – १०.२८ पूर्वाह्णे, २९ जुलाई,२०१९, बहादुरगढस्थे गृहे ।**

...............

## ३७.॥ आवारा वयम् ॥

✽✽✽✽✽✽✽✽✽✽✽✽

**आवारात्त्वं[11] त्वय्यस्ति?**
**अन्विष!**
**पृच्छाऽऽत्मानं कियन्तम्**
**आवारात्वं बिभर्षि त्वम्?**

---

[11] आवारेति पदं म्लेच्छभाषाया अस्ति, तेनैव च भावेन कवितााप्येषा लिखिता, किन्तु संस्कृतेन व्युत्पत्तीच्छुकाः आ समन्ताद् वारयन्ति समाजरीत्यादिबन्धानीति आवाराः इति करणाल्लभेरन् ।

यदि वस्तुतस्त्वम् आवाराऽसि,
तर्ह्येहि याम भ्रमणाय !
सकलेयं धरा नोऽस्ति

सर्वे प्रचलितचर्यायामेव जीवन्ति म्रियन्ते च
आवारा एव रज्जूनिमान् छिन्दन्ति
नीलपथे भ्रमन्ति
कुसुमगन्धिनो भवन्ति

य आवारास्ते धन्या - इत्यस्मन्मतिः!
अस्माभिस्तु इच्छद्भिरपि न हीयत - आवारात्त्वम् !
क्रियाभिस्स्यान्न वा
मनसा तु वयमप्याचरेमैवाऽऽवारात्त्वम् ।।

जगदिदमस्मान् हेयदृष्ट्या पश्यति,
पश्येत्तेन किं?
वयं न त्यजेमाऽऽवारात्त्वम्
उच्चैर्ब्रूमह आवारा वयम्!
आवारा वयम्!

पश्यत नश्चाऽऽवारात्त्वम्,
निशार्धेऽनिद्रिता वयं
राजपथेषु तडागतटेषु वा
भ्रमन्तश्चोच्चैर्घुष्याम - आवारा वयम् !
आवारा वयम्!

आवारेति पदं न सर्वैर्लभ्यम्
य एतानि पुष्पाणि परितो भ्रमरीभूय भ्रमन्ति

ये चैतेषु निशामुखेषु , खद्योतीभूय झिलमिलायन्ते
त एवाऽऽवारेति पदवीभाजो भवितुमर्हाः।

न च कुलपतिसहस्रैर्-
विश्वविद्यालयैर्वा तत्पदं दीयते
एतेषां शक्तिरेव नास्ति, आवारापदप्रदानस्य !

महनीयम् आवारापदं, न क्षुद्रैर्लभ्यम् !
तथापि ब्रूत - आवारा वयम् ! आवारा वयम्!

----------------

## ३८.।। गौडाश्शृणुत ।।

क्वत्या वयमिति वयमपि न विद्महे
केचिद्वदन्ति गौडदेशो बाङ्गानां
कैश्चिद् - गौडा पर्वतीयाः इति मन्यन्ते
केचिच्च गुडप्रिया गौडा इति व्युत्पत्तिलभ्यार्थसराः
।।१।।

गौडपादाचार्यप्रथितं गौडवैदुष्यम्
दौलतराम-वेणीरामाभ्यां वा गौडाभ्यां
रुद्री-गृहशान्त्यादिलेखकाभ्यां
वैदिकाभ्यां गौडयशः ख्यापितम्

।।२।।

उत्तममध्यमाधमभेदैर्वर्तन्ते गौडा:
किन्त्वद्य न तज्ज्ञानं लभ्यते
कुलसरणीनिरीक्षकाश्चापि
न वैशिष्ट्यैश्चेष्टन्त इष्टान्यर्थयितुम्

।।३।।

किं किं समीक्ष्यमिति समीक्षापरैर्-
भावयेच्चेन्नैकोऽपि विवाहितस्स्यात्
अतस्त्यज्यत एवाधुना
कुलसरणीगोत्रादिविशेषेक्षणानि ।।

।।४।।

अद्य तु शूद्रेणापि , विप्रकन्या..
अहो क्षम्यतां
रजस्वला विवाह्यते, चेत्सर्वकारीयवृत्तिमान्
भवेद्दुर्गुणी चापि,
विहाय गुणिनं गौडब्राह्मणं सुशीलं
बुधं भावुकं कविम् !

।।५।।

किम्वा ब्रवामाधिकं
विप्रगाथां गौडगाथां वा मतिमन्!
अद्य तु सर्वं तज्जात्यादिकभाषणमपि
अपराधसूच्यां सूच्यते राजतन्त्रैः!

।।६।।

अतो रे गौडा:! भवन्तो निद्रां यन्त्वधुना !
नेदमपररात्रं गौडीगिरामुद्घाटनोपयुक्तम् !
वयन्तु रहसीवेह सरेमैवात्मभावान् यथाकथञ्चित् ।

।।७।।

काल: - ०२:०९ अपररात्रम् ।

गाजियाबादस्थगृहे ।

-----

## ३९.।। शाहरुखखानः ।।

************

क्वचिन्मयाऽनुभूयते यदहमेव
शाहरुखखानोऽस्मि!
तस्य प्रणयाकर्षिनेत्रेऽवलोक्य
का न जायेत मुग्धा!

तस्य च प्रणयनिवेदनकला
कां नाकर्षयेत् तत्कालं,

तत्स्मितमश्रूणि च युगपदेवावलोक्य
को न वक्ति तं शृङ्गारसम्राडिति!

वीर-ज़ाराख्यं वा चलच्चित्रं दृष्ट्वा
तद्गानरागाभिनयादिकमालोक्य निशम्य च,
को नैष्यति सरागतामात्मानमपि तत्रैवारोपयन् !

"वधूं नयिष्यन्ति सहृदया" इत्यत्र वा
तत्कृतमभिनयं प्रणयकथां वा
स्वान्त:पर्यन्तमनुभूय
को न हर्षति सुहृज्जन:!

कृतबुद्धिपराक्रमकौतुकाभिनय:
स एव च डॉनत्वमयाद्दर्शितडॉनरूप:!

शाहरुख़प्रभृतीनां नृत्यत्येव स्वाभाविकी गुणप्रशंसा,
सहृदयाधरेषु गुणवताम्!

मोहब्बताख्ये चलच्चित्रेऽमिताभाऽभिनयस्त्वस्त्येव नः प्रिय:,
यश्च विस्मरेत्तत्र शाहरुखाभिनेतृकलाम्
मन्ये सोऽप्यमान्य:!

मज्ज्ञातृभिर्न चिन्त्यतां यत्कथमहं
सन्नीदेवलायमानोऽपि
शाहरुखप्रशंसनपरो वर्ते !

मन्येऽपक्षपातिनो वस्तुतः
कवित्त्वमीयुरिति गीयेरञ्जनैः!

अतो कामिनीरञ्जनेऽहमपि
भवेयं शाहरुख़श्चेति प्रयत्नपरो
न को युवाऽद्याऽवलोक्यते !

स एव बादशाहबाज़ीगर-
किंगख़ानाद्यनेकाख्यैरभिधीयते लोके!

अतश्शाहरुख़! त्वम्मामपि
सर्वसुन्दरीरञ्जनकलां शिक्षय,
येनाहमपि यौवनसुखं लभेय !

## ४०.।। कीदृक्त्वं वाऽऽपद्यते ।।

************

कीदृक्त्वं वाऽऽपद्यते क्वचिच्छिखी स:
कवितादर्शितहृत्कूपाऽपोमधुर: प्रीतमखी स: ।
चनीखन्यत इव हेमप्रदतत्त्वं तेन सदैव
रक्तिसुदर्शितभावपथा सरतीत्थमथापि तथापि
गतदिनानां स्मृतिरद्यापि तुदति तम्,
काचिद्बाल्यकालस्य मैत्री चाद्याप्याह्वयति तम्,

अस्तङ्गम्यमान इवार्के काचिद् रम्यकल्पा वक्ति -
सन्तोड्य बन्धनानि पुनरेत्य मिल तया !
नाऽहं कविमात्मानम्मन्ये क्वचिद्वा शृङ्गारस्य
नो मे विदग्धं वा मनो कस्याश्चिद्विरहैः
एकाकी पान्थ इव क्वचिद्वर्षयाम्यात्मभावान्
तादृग्वृष्टिदिनमिवावैहि माम् !
स्वप्नलोकैरिव वा वात्यस्मज्जीव्यदिनम्
मध्याह्नजागृतपितृवद्वा क्वचिद्भ्रामि
नावैतास्मत्कल्पनं कीर्तिकाङ्क्ष्यैकरसप्रियस्य
सङ्गोप्यात्मवपुर्विचरन्तं शैवदिनाभा-वद्भ्रासन्तमवैत !
......

## ४१.।। पुनरायास्यामि ।।
************

पुनरायास्याम्यहम्,
एनं नीलाकाशं भित्त्वा!
मेघानारुह्य वा कश्चिदपूर्वदर्शितरूपो!
मरुतीभूय वा स्वप्नेषु वहिष्यामि!
त्वम्मां वृष्टिदिनमिवावैहि
यज्जनयति स्वप्नलोकमिव रम्यताम्!
अरे, वृष्ट्यनन्तरं पत्रस्थबिन्दौ

मामेव झिलमिलायमानं पश्य!
कथमिवाप्स्यसि मां वा क्षणमात्रदृश्यम्
धूमायमानं , नभसि विलीयमानम्!
अथवावैहि मां कदाचिद्गुनगुनायमानगानस्यौदास्यम्!
रम्यैकान्तस्वाप्नलोके आह्वयन्तं
क्वचिददृश्यं, नरात्मकत्वेऽप्यापन्ने दर्शितापूर्वलोकच्छटम्!
नो वेत्सि,यास्येव त्वं पुनर्भ्रान्तिं
यन्मन्यसे मां मृण्मयमिव,
नाहं रे तत्,
अस्मिन्ननिष्टे लोके क्व नो वास:?
क्षणमात्रदृश्यं हिमांशूयन्तमवैहि!
पुनरायास्यामि न वेत्यहमपि वेद्मीति नास्ति,
त्वदाह्वानैस्ताम्रनिलयपुरभिक्षुकोऽप्यहं
क्वचिन्मौनस्मित-कान्तो भास्यामि,
पुनरायास्यामि!

---------

## ४२.।। आत्मानं विडम्बयामि ।।

************

आत्मानं विडम्बयाम्येव,
याचयित्त्वा स्वेप्सितम्!

मनस्तरङ्गयाम्येव , पीत्वा
तद्रूपमाधुरीम् !

नव्यार्थं कल्पयाम्येव, दृष्ट्वा
झर्झर्झरितान्निर्झरान् !

शब्दान्नर्तयाम्येव, घ्रात्वा
तत्सौन्दर्यसुमानि ।

अरे बुद्धाः! अहं वर्षयामि,

मेघायमानो, दृष्ट्वा
शुष्कलोकानधरान्वा !

अर्चयामि वा दीपयित्त्वा,

पदार्चींषि सायन्तने, शारदां
सारस्वते मन्दिरे !

ताण्डवायमानं वाऽवैहि मां
धर्माहवप्राप्तं, शैवीदयोद्भासिवपुष्कम् ।

ध्वनिमिव गुञ्जायमानं वा
तत्पदपरमिति शृणुहि ,
दत्तकर्ण गीर्णं गीर्वाणैः !

स्वरिष्यामि वा श्रुतिमात्रगोचरोऽपि
स्पृष्टान्तस्स्थः,
क्वचिन्मोहकहृद्दीतात्मनि!
रे भावैकसरणीरूढाः!
मामदर्शितरूपमप्यवैत
अस्याम्पदावल्यान्निगुम्फितम्!
मन्यध्वं वापरं
क्वचित्प्रकृतिप्रकटितापरलोकेन्द्रधनुरिव
खोल्लसितम् !

*****

हिमांशुर्गौडो
२४-१२-१९
९/४४ पूर्वाह्ले,शैततौं वेष्टितकम्बलोऽयम्!

............

## ४३.।। हरिल्लोकानाकर्षयामः ।।

************

मित्र! वयं हरिल्लोकानाकर्षयामः!
तस्मिन् पातयेम त्वन्मनो, यन्मार्गो नीलपथे रमयेत्!

इमान्रम्यर्तूंस्तेऽर्जयेम,
यैर्दर्श्यन्ते नगनगरेषु मधून्युत्सृजन्तो हेममेघाः!
यत्र चोदेति सप्तवर्णवर्षिनभोभाः!

हे हर्यमृतनिपीतामृत हयामो वयन्द्युभिदो
वायवो वा चिद्धयाः!
क एते नो रोधिन इव वर्तिनो वित्त नस्तात्पर्यम्!

वृद्धाः संसरेम वाऽऽत्मभावभावपुर्भिरदृश्यरूपाः!
शिवात्मविदो वा कथं श्रयेमहीमाँल्लोकान्
पातकान्नाशकान्निर्ऋतिमात्रमूलकान्!

अतश्शेताममुष्यान्निशायाममृतमय्यां
सुप्तोऽपि गुप्तनिधिं लप्स्यसे!
तथैव चाऽपश्यन्तोऽस्मान्
शेध्वं रे व्यर्थदत्तकर्णा अवेदनपराः!
------
हिमांशुगौडः,
०१०-०३ रात्रौ गाजियाबादस्थगृहे ।
०४-०१-२०२०

---

## ४४. रे विप्र! शृणु!

प्रेमव्याजैस्स्वार्थसाधयित्र्यस्तु सुखङ्गताः,
हार्दिकप्रेमयुक्तास्सीदन्ति विप्र!

को वक्ति विजयस्सत्यस्य,
सर्वत्राऽसत्यं विजयते विप्र!

सन्मखाग्निः क्वाऽवलोक्यतेऽधुना,
श्मशानाग्निस्सर्वत्र दृश्यते विप्र!

अरे! चौर्यचतुराः छलिनो ह पूज्यन्ते
सरलं सुजनं कः पृच्छति विप्र!

साधुष्वपि धनवताञ्जयजयध्वनिः
तपस्विनं को पश्यति विप्र!

महाद्वेषदग्धा मिथः कवयः
परकवितां कः प्रशंसति विप्र!

केवलैश्शाब्दिकाडम्बरैस्तुष्यन्त्यात्मनो
कस्सत्यमाचरति विप्र!

वयन्तु लोकादस्मान्नाधिकं वाञ्छेम
अत एकान्ते दिनानि यापयेम विप्र!

किम्ब्रवाणि जीवनकथां, सर्वत्रैव
वञ्चनस्वार्थपक्षपातपीडितोऽहं विप्र!

*****

हिमांशुगौडः
१०:१० पूर्वाह्णे, १४/०२/२०२० शुक्रे, गाजियाबादस्थनिलये!

---

## ४५.।। वयम्मनुष्याः ।।
************

वयम्मूषकान् मत्स्यान् कीटान् पतङ्गान् वा
सर्वानेव दृष्ट्वा दयार्द्रा भवामः!
तस्मादेव हिंसाविरताः
वयममांसभक्षिणश्शोभामहे !

केचिच्च नृदेहेनाऽपि पिशाचत्त्वं व्रजन्ति
भक्षयन्तो निघ्नन्तश्च प्राणिनः
त एवैते कुधर्मभाषावेशदेशादिपक्षपातिनो
घातयन्ति नृन् धर्मं मत्त्वा, किन्तु ते पशुभ्योऽप्यधमाः !

वयम्मनुष्या पतितानुद्धरेम !
दीनपीडा अपाकुर्मः, क्षुत्पिपासितान्
दद्मोऽन्नान्यपांसि !
अत एवास्मन्मनुष्यत्त्वम् !

नहि केवलं स्वोदरम्भरिणो नरो भवन्ति,
तैस्तु कलङ्कितमेव नृजन्म !
वयन्तु स्वप्राणानपि परेभ्य उत्सर्जयामः,
अतो वयम्मनुष्याः!
..........

# ४६.।। पिबामि चायम् ।।

✻✻✻✻✻✻✻✻

यदा मनो भवति किञ्चित् खिन्नं
चिन्तनाच्च भवति भिन्नं
धाराभ्यो भवामि च्छिन्नं
तदा चित्तुष्ट्यै
पिबामि किञ्चिच्चायम् ।।१।।

यदा विचारैः नव्याः दिशाः न लभ्यन्ते
माम् अश्रुत्त्वा हठीभिः, नैजीरेव व्यथाः श्राव्यन्ते
तदा तद्धठापनोदनाय , किञ्चित्  (अर्धकपमात्रम्)
पिबामि चायम् ।।२।।

यदा केचन छात्रा असन्मार्गे प्रवर्तन्ते
शब्दशास्त्रे नैवैधन्ते ,सुन्दरीणामेव मुखान्यवलोकन्ते
तदा तेषां धीचोदनाय, कर्तव्यबोधनाय
किञ्चित् (एककपमात्रम् )
पिबामि चायम् ।।३।।

यदा नागेशपङ्क्तिः मच्चित्तलोकं न विशति
कापि नव्या कविता नोदेति
व्याख्यानप्रगल्भता च लुप्यति

तदा
हर्षोदयाय (द्विकपमात्रं)
पिबामि चायम् ।।४।।

यदा यजमानगृहे नवदिनात्मकं भवेदनुष्ठानं
लभ्यते यद्यपि तत्र बहु मिष्ठान्नं
फलादीनाञ्च भवेद्वापि तत्र प्रतिष्ठानं
किन्तु तत्सर्वं निषिध्य
दिवसे केवलं पञ्चवारं
किञ्चित् (कपद्वयमात्रं) पिबामि चायम् ।।५।।

यदा कुटिलास्समाजैरीड्यन्ते
सरलजनाश्च पीड्यन्ते
शकीना चाशरफालिना न दीयते
तदा सन्नीदेवलभावजागृत्यै
किञ्चित् (एकलोटामात्रं)
पिबामि चायम् ।।६।।

यदा प्रीतिभावनिवेदने लज्जा बाधते
योषिता च मां विहाय स्वगृहं राधते
तदा शृङ्गारोद्दीपनाय
किञ्चित् , एककपमात्रमेव किन्तु पञ्चताराहोटले
तां पाययामि स्वयं च,
पिबामि चायम् ।।७।।

पापाच्च भायं भायं
विचारान्मनसि नायं नायं
निरेत्यस्मदायुःक्षणगणः
इति चिन्तनं यदा मृत्युं स्मारयति
तदा मनसा हायं हायं,
किन्तु वास्तविकरूपेण पायं पायं
पुनरेकवारं
तीव्रपत्रीयुक्तं पिबामि चायम् ।।८।।

भाषणानि श्रुतानि यद्यपि चायनिषेधकानां
दोषाश्च मताः रोगसमेधकानां
चतुःपञ्चाप्यहानि जीवनस्येति विचिन्त्य
पिबामि चायम् ।।९।।

.....................

# ४.।। चतुर्थी वल्लरी ।।

# (दीर्घकाव्यानि)

# ४७.।। चल चायपाने ।।



मित्रम्मदीयं हि नवीननामा,
द्विजैस्सदा यो गदितस्तिवारी
नब्बू जना यं च वदन्ति भूयः,
स बोधयेन्मां चल चायपाने ।।१।।

प्रभातकाले च दिनान्तकाले,
मध्याह्नकालेऽपि च यः कदाचित्
निद्राम्मदीयामपसार्य वक्ति-
चल चायपाने! चल चायपाने ।।२।।

कार्यस्य विश्रान्तिमवाप्तुकामः
मस्तिष्कसंस्फूर्त्तिमवाप्तुकामः।
शास्त्रस्य तत्त्वं परिलभ्यतां रे!
चल चायपाने! चल चायपाने ।।३।।

काव्यानि यस्मात्परिसंस्फुरन्ति,
खेदश्च शोकः परिणाशमेति

नव्यास्तरङ्गाः हृदये सरन्ति,
तस्माद्द्विज!त्वं चल चायपाने ।।४।।

पिबन्ति ये नैव कदापि चायं,
शास्त्रं नवत्त्वेन न चिन्तयन्ति
जीवन्ति तेऽपीह कथं न जाने,
चल चायपाने! चल चायपाने ।।५।।

शास्त्रार्थगोष्ठ्यामपि शोधगोष्ठ्यां
काव्यस्य गोष्ठ्यान्तु विशेषतस्तत्
चायं समैस्सभ्यजनैस्सुपेयं,
चल चायपाने! चल चायपाने ।।६।।

रुष्टो गुरुश्चेद्भगिनी च माता,
भ्राता पिता वा दुहिता च भार्या
शिष्यश्च मित्रं यदि ते द्विज! त्वं,
चायं प्रदेहि द्रुतमेव तेभ्यः ।।७।।

चायं सदा पाययति द्विजो यस्-
स्वसुन्दरीमित्रजनाय होटले
तस्मान्न खिन्ना भवतीह मुग्धा
उपायसारी रतिमाप्नुते सः ।।८।।

द्विजा अनेके हि मम प्रकोष्ठे,
आयात्य चोच्चस्वरगर्जमानाः
वदन्ति- शास्त्रिन्द्विज काव्यकारिँ-
श्चल चायपाने चल चायपाने ।।९।।

व्हाट्सेपमेवं परिचाल्यमानः
तथैव रे फेसबुकेऽपि मग्नः,
ग्रीवाञ्च नत्वा निजफोनमध्ये
चल चायपाने! चल चायपाने ।।१०।।

स्वप्ने मदीयेऽद्य समेति गान्धी
सदोपनेत्रेण लसत्सुनेत्रः
स्ववेत्रयष्ट्या प्रतिबोधयेन्मां -
चल चायपाने! चल चायपाने ।।११।

पुनश्च स श्रीशिमलानिवासी
प्राप्तोऽभिराजेन्द्रकविः प्रसन्नः
कथं भवान् वै प्रकरोति काव्यं,
पृष्टे मयोक्तं - कुरु चायपानम् ।।१२।।

चायप्रभावाद्भवतीह मोदी,
चायप्रभावादमिताभबच्चनः
चायप्रभावाद्धनवान् मुलायमः
तस्माद्द्विज! त्वं भव चायपायी ।।१३।।

सरस्वती मे पुरतोऽद्य संस्थिता,
दुःखे निमग्नोऽसि कथं हिमांशो
कथं न काव्यं प्रकरोषि रात्रौ,
मातोऽद्य चायं न मया निपीतम् ।।१४।।

प्रबलस्य यज्ञे प्रखरस्य यज्ञे,
द्विज ! त्वमेषीह कथं न भक्त्या?
पृष्टे बुधैस्तत्त्वमिदं समुक्तं -
श्रेष्ठं न चायं मिलतीति तत्र ।।१५।।

चेत्कौमुदीं वाऽपि मनोरमां वा,
चेच्छेखरं विप्र! महच्च भाष्यम्
कण्ठीप्रकर्तुं बुधतां समेतुं
चल चायपाने चल चायपाने ।।१६।।

न देवलोके न च नागलोके
न यक्षलोके न तथाऽऽसुरेऽपि
चायं सुलभ्यं भुवि कर्मलोके,
चल चायपाने चल चायपाने ।।१७।।

दुग्धे घृते नैव मधौ न तक्रे
रुचिर्न धूम्रे न च वा सुरायाम्

कथन्न जानीम मुधा पिपासा-
ग्रस्ताः वदामश्चल चायपाने ।।१८।।

केचित्सुरायामपरे च वामा-
ऽधरे धनाम्बौ च रसेषु मग्नाः।
रम्यन्तु चायाऽमृतमेव लोके,
यैर्नैव पीतं भुवि वञ्चितास्ते ।।१९।।

जागर्ति रात्रौ यदि काव्यकारः,
कार्यालये वा लिपिकोऽपि सुस्थः
स्थाने दरोगाऽऽपणके वणिग्वा
सर्वं हि तच्चायकृतं वदन्ति ।।२०।।

स्वामिन्कथं भागवते गतिस्स्यात्
कथञ्च शब्दप्रवरो द्विजस्स्यात्
कथं प्रचण्डश्श्रुतिधृच्च विप्र-
स्समं हि तत्त्र्यम्बक! संवदेच्चेत् ।।२१।।

स्मितास्यसञ्चिन्तनपूर्वकञ्च
विलोड्य चित्तस्थसमस्तशास्त्रम्
मुहुर्मुहुर्नृत्यरतो यतिस्सो-
ऽब्रवीत् सुचायं पिब हे हिमांशो ।।२२।।

ग्रीष्मे च शीतेऽप्यथवा वसन्ते
मेघावृताकाशसुमङ्गलेऽपि

कार्यञ्च किं त्र्यम्बक किञ्च पेयं,
चायस्य पानं कुरु हे हिमांशो ।।२३।।

दिनेऽपि वा रात्रिरिवाऽवभासे
कृष्णैश्च मेघैः परिवर्षितैश्च
शुभे समे मोदनकार्यजाते
चायं पिबेत्सोमरसेन तुल्यम् ।।२४।।

उल्लूकलोकेऽपि शुकावलोके
काकावलोके च मयूरलोके
गृध्रैर्विलोकैर्निधृतो दिनान्ते
दुग्धं पिबेद्गोक्षुरचूर्णयुक्तम् ।।२५।।

सर्पैस्सदा फुङ्कृतिमानलोके
क्षीरं पिबन्सन्नकुलश्च दृष्टः
दूर्वादिभिर्वृक्षगणैर्वनेषु
श्यामायमानेषु हरित्सु विप्र ।।२६।।

पश्यन्मृगादीन्महिषान्वनस्थान्
चित्ते स्वकीये परिमोदमानः
संसाररूपाण्यपि रञ्जकानि,
भिषग्भृतं चायमिदं पिबेस्त्वम् ।।२७।।

पूजाः विभिन्ना अपि वाऽर्चकाश्च
नैकः कविर्यस्य वचः प्रमाणम्।

चायस्य तत्त्वं निहितं गुहायां
गौडाः गताः येन स एव पन्थाः ।।२८।।

सायन्तने चारुणताप्रजाते
खेऽर्के तथा पश्चिमदिक्प्रयाते
चेत्प्रेमिका तेऽत्र भवेच्च पार्श्वे
तया सहैवं चल चायपाने ।।२९।।

त्वं पल्सरं वा द्विज रे बुलेटं
चेद् यामहां हो नववस्त्रधारी
आरुह्य याहि द्रुतमेव तत्र
स्फूर्तिप्रदं यत्र भवेत् सुचायम् ।।३०।।

चेच्चन्द्ररात्रौ ह्यपि रिक्तरात्रौ
चेद्वा विवाहस्य सुखार्थि-रात्रौ
यद्वाऽपि कालं परियापनाय
जागर्षि, चायं हि निपीय सुस्थः ।।३१।।

चेन्मेघदूतं बत देवदूतं
चेत्कामदूतं पठति क्वचिद्वा
पूर्णं रसं तत्परिलब्धुकामः
शनैश्शनैः रे कुरु चायपानम् ।।३२।।

श्वत्त्वे युवत्त्वेऽप्यथ देवराट्त्वे,
पापैश्च पुण्यैर्यदि रे प्रयासि

रोटीं सुरां वाऽप्यमृतं विहाय
चायस्य पानं कुरु जीवबुद्धे ।।३३।।

कस्यापि शापाद्यदि वानरत्वे
स्वकीयदुष्कर्मवशादथापि
निपत्य दत्तं भुवि चान्नखण्डं
विहाय, चायं पिब रे कपे ! त्वम् ।।३४।।

लेखनसमयः – सप्तवादने सायङ्काले, दिनाङ्कस्तु विस्मृतः,
जनवरी २०१७,रा.सं.सं. भोपालपरिसरस्थे
कविभास्करच्छात्रावासे, ११७ सङ्ख्याके कक्षे ।

----

## ४८.।। मण्डूकमोदः ।।

❋❋❋❋❋❋❋❋❋

यो धीरैः रहसि प्रमग्नहृदयैश्शान्तैश्च वाचञ्यमैः

ध्येयो धूम्रवपुर्गणेशभगवान् लोकस्य सोऽस्त्येकराट्
सद्यो दुःखमहाब्धिमज्जितसुतं पायात्, सुखं यच्छतात्
श्रीदश्श्रीकर एहि जीवनमिदं धन्यीकरोत्वीश्वर ।।१।।

मण्डूको भवति क्वचिच्च पुरुषः कूपस्थके कूर्दयन्
आनन्दैर्गणयन्न देहजनितां भ्रान्तिं मुदा तिष्ठति
नष्टेऽम्बौ अपरं प्रयाति सलिलागारं यथा मज्जितुं
तद्वत्क्षीणधनाशयं हि पुरुषास्त्यक्त्वाऽर्थदं यान्त्यहो ।।२।।

हे शम्भोऽहमिदं विलोक्य जगदाऽऽश्चर्ये क्वचित्प्लावितो
भूत्वा चैव विचारयामि हृदये कोऽस्यास्ति हेतुर्ध्रुवम्
कश्चान्तोऽस्य न वेद्मि चालयति कः सन्तिष्ठते केन वै
यावन्नो भवता जनो ह दयया चार्द्रीकृतश्श्रीश्वर ।।३।।
(यावच्चेश तवाश्रयो न मिलितो भ्रान्तिर्न वै नश्यति )

मण्डूको भव शीघ्रमेव मनसो नृत्त्वं जहातु क्षणात्
पश्येदं कथमस्ति चित्रलसितं मोद्यं जगत् तेऽभितः
बुद्धिर्नुश्च शरीरमस्तु तव चेद् वर्षाभ्व एतद्वपुः
सञ्चिन्त्यैव कथं तवात्र हृदये भावो नवो जायते ।।४।।

नैवं त्वां च विदन्ति जागृतनराः सुप्ताः जनाः नैव वा
सर्पेभ्यो हि बिभेष्यसि प्रथमतो रक्ष्यं शरीरं ततः
सङ्कूर्द्यैव च यास्यसीति सलिले मोदश्च बोभोष्यति
आर्द्रैश्शष्पतृणैर्नवैश्च मृदुलैर्मैत्री हरिद्गामिनी ।।५।।

योो मेघो जनकर्णसौख्यकरणैश्शब्दैर्मुहुर्वर्षति
ग्रीष्मं दूरयति प्रमोदभरितं चित्तं करोति क्षणात्
योषिद्भिर्मदनातुराः रतिरताश्चास्मिन् ऋतौ सज्जिताः
मण्डूक्या सह सङ्ग आह नितरां ते कामवृष्टेः फलम् ।।६।।

मण्डूकासनसंस्थिताः मदनिकासक्ताः नराः नैशिके
घोरैः मेघघटास्वनैश्च नभसा चैवाम्भसां वर्षणे
विद्युद्दामलताप्रकाशितभुवि प्रामोदिताः मैथुनैः
तन्वन्ति प्रियतां सुखं मदनजं मण्डूक मोदेः कथम् ।।७।।

सर्पाः ये परितो भ्रमन्ति निशि च क्षुत्पीडिताः व्याकुलाः
ते तेऽनाद्यरयस्स्वकं जलविहारि त्वं सदा रक्षय
दुष्टा सज्जननाशनाय सततं व्यर्थं हि वाञ्छन्त्यरे
युक्त्या बुद्धिबलात् प्रवर्धितवपुः मण्डूक! सङ्कूर्दय ।।८।।

मण्डूक! त्वमहो विभिन्नसुकृतैर्देहं निजं धारयेः
वार्युद्धर्षमनास्त्वमेव जगते गीतानि संश्रावयेः
कीटैस्त्वं परितोषमेषि झटिति प्रीतिं नृणां धारयन्
वर्षास्वम्बुगतः निजाङ्करमणीरक्तो कदा दृक्ष्यसि ।।९।।

त्वां वीक्ष्यैव समोऽपि हृष्यति जनो वर्षागमासूचकं
मेघैस्सार्धमहो तवाऽऽगममपि जायेत देशे क्वचित्
सिद्ध्या मानववाग्युतो भवसि भोः शास्त्राणि सञ्जल्पसि
मण्डूकैहि गृहं ममार्थदवपुष् काव्यं च मां श्रावय ।।१०।।

कामाग्निश्च विवर्धयन्ति सकले वर्षासु मेघस्वनाः
नुर्लोकस्समुपैति चैव रमणीजङ्घासमारक्ततां[12]
नान्यतौ मदनो भवेत् प्रबलवेगीदृक्सुखोत्पादकः
तस्मिँस्त्वद्ध्वनिमानिशम्य मनुजाः रत्यैस्समाव्याकुलाः।।११।।

त्वं क्षुद्रोऽपि घनावलम्बनवशात्सार्धं जलैर्वर्षसि
पुष्टिं च प्रतियासि यौवनमदैः कामेन सम्पीडितः
मण्डूकीं प्रतिवेदयन् निजरतिं संशोभसे प्रावृषि
सम्यक्ते रतिभावभावितविधिस्त्वां वाऽऽश्रयामो वयम् ।।१२।।

त्वं धीरोऽसि च जिह्वयैव जठरं सम्यग्बिभर्षीति भोः
कीटान् क्षुद्रशगोऽपि नैव कुरुषे जग्ध्वाधिकं लोभतां
वीर! त्वं न बिभेषि जातिरिपुषूद्युद्धं करोष्याबलं[13]
अन्यैश्चापि गुणैः प्रसन्नमनसा मण्डूक धन्योऽस्यहो ।।१३।।

नैव त्वां परिपश्यतीह जलमुत् मूर्खो जनश्चिन्तयन्
क्षुद्रोऽस्तीति वृथैव चापि महतीं भ्रान्तिं स वै वर्धयेत्
त्वं त्वन्धे तमसि प्रफुल्लनयन प्रालोक्यते नैव वा
अन्यैश्चापि गुणैः प्रसन्नमनसा मण्डूक! धन्योऽस्यहो ।।१४।।

मण्डूकस्य निधिं[14] निधाय हृदये यच्चिन्तयेत्सज्जनः

---

[12] रमणीवक्षस्समारक्ततामिति पा.

[13] अधिकान् कीटान् न जग्ध्वा

[14] मण्डूकनिधिरत्र कामरस एव

भूयात्कामरसो य आर्द्रयति नृन् शान्ता पिपासा भवेत्
ओष्ठौ यश्च पिबेत्समार्द्रवपुषा वर्षारतिं कामुकः[15]
मण्डूक! त्वमिमान् विलोक्य रतिरक्तान् मोदितश्चेतसा ।।१५।।

ये गन्धाम्बुसु गाहयन्ति सलिलागारे नृपास्सस्त्रियः
क्रीडां कामविवर्धिनीं परिचरन्तश्चैधमानास्सुखम्
तेऽपि त्वद्वदयन्ति नैव रमणं यादृक् तनोष्यध्यपः
मण्डूकीरतिसंरतस्त्वमधुना भूपानतिक्राम्यसि ।।१६।।

जानीमो न वयं क्व शक्तिरथ ते वर्षानिशायां यया
टर्टरेति रवन् दिशासु मधुरं सङ्गीतमागुञ्जयन्
क्षुद्रोऽपि त्वमशेषरात्रिरमणं यत्कौतुकैरासनैः
कुर्वन् व्येसि निशां प्रशंस्यमदनस्तन्मत्कृते शिक्षय ।।१७।।

मेघास्ते सुहृदो जलं शुभकरं वृष्टिश्च कालः प्रियः
वासस्ते च सरोवरेऽप्यथ जलैस्सिक्ते हरिद्घास्थले
क्षुद्राः कीटपतङ्गमाः प्रियकराः भक्ष्याश्च पङ्कादिभिः
कीर्णे कूर्दितमोदितोऽसि रमणे पत्राणि मित्राणि ते ।।१८।।

त्वं हारित्यनिभाविभूषित! वने कृष्णोऽस्यहो कुत्रचित्
मेघे वर्षति ते ध्वनिश्च पतति श्रोत्रेषु चानन्ददः
रूपं तेऽपि विलोक्य शीतमरुता संस्पृष्ट आह्लादितः
रामाऽयोगवशात् स्मराकुलमनाः पर्युत्सुकी जायते ।।१९।।

[15] कुरुत इति शेषः

मण्डूकाय रतिं देहि कूपस्थाय विशेषतः ।
रामा दूरगता यस्य कामेन पीड्यते च यः ।।२०।।

मेघादग्निरतोऽपि वर्षति जले चौष्ण्यं हि सांसिद्धिकं
शीतांशुः परिपीडयेद् बहुतरं वायुश्च वै दह्यति
आकर्णं परिलम्ब्य पञ्चशरको बाणैश्च मां विध्यति
मण्डूकीं परियच्छ मे हरिगुरो रौतीदृशं दर्दुरः ।।२१।।

कृष्णान् वीक्ष्य भवन्ति हृष्टमनसो ये कामुकीभिर्वृतः
मेघान् ये च समार्द्रयन्ति वसुधां कामप्रमोदाश्च ये
रात्रौ दीपशतैः रतेषु तमसि क्वाचित्कभेदो भवेत्
सार्द्राः सौख्यमवाप्नुवन्ति मदनैः वर्षासु ते मैथुनैः ।।२२।।

लब्धं कामसुखं न यैरपि जनैः प्रावृट्सु दग्धैश्च हा
नू रूपेऽपि महान् हि कष्ट उत दुर्भाग्यं भवेन्नेदृशम्
त्यक्त्वेमां बत कुण्ठितामिव दशां दुःखस्थितं भोः जन
मण्डूको भव तन्त्रसिद्धिबलतो वर्षासु सम्मोदय ।।२३।।

अद्यत्वे तु महाकष्टैर्दग्धाश्च प्रत्यहं जनाः ।
ये वामारहिताः ये च वामभाग्याश्च निर्धनाः ।।२४।।
नैव मे रतिदाः नार्यः दयार्द्राः मैथुनैस्सुखम् ।
यच्छन्तीति महादुःखैर्यापयामि स्वजीवनम् ।।२५।।

यौवनं नाशतां याति कामिन्यो न मिलन्ति मे ।

एवं शोकेन रुदता निद्रा नो लभ्यते मया ।।२६।।

मण्डूकी भवतु प्रियेऽद्य रमणं तेनासनेनाचरन्
क्रीडिष्यामि सह त्वया निशि कुचाभ्यां कन्दुकाभ्यामिव
मण्डूकश्च भवामि कामसुखता सर्वानतिक्राम्यसि
अग्रे चापि दिने न विस्मृतसुखा त्वं तद्रतिं कामयेः ।।२७।।

भेकीवच्च भवन्ति वामनयनाः काश्चित् प्रकृत्या भयात्
गेहे ताः मरणं प्रयान्ति मनसश्चाञ्चल्यसंरोधनात्
कूर्दन्ति प्रथमे समागमविधौ लिङ्गप्रवेशे भगे
चाञ्चल्यैः रतिवाञ्छुकाः नववयोढाः यान्ति मण्डूकिताम् ।।२८।।

मण्डूको वसति प्रवृत्तिगुणतोऽप्यन्येषु जीवेष्वपि
पुंसां भूरिरतिप्रकारगुणता चाञ्चल्यमाकूर्दनम्
एकान्ते मदनव्यथाप्रकटनं नुर्भावसन्त्यक्तता
तन्नानासनसंश्रयोऽपि भणति प्रावृट्सु भेकः पुमान्[16] ।।२९।।

अद्याहं निशि कामुको निजगृहान्निर्गत्य मार्गङ्गमी
तत्रानेकसुवर्णरूपलसिताः भेकाश्च भेकीरताः
वृष्ट्यां ते परिलोकिताश्च सहसा सन्दृष्टवान् योषितां
काश्चिद् , भेकरतिर्ममापि रमणं प्रावृट्सु चारभ्यते ।।३०।।

मण्डूको जयति प्रमोद्यवपुषा सर्वापदाः वैरिणः

---

16 तन्नानासनसंश्रयोऽपि मनुजान् भेकत्त्व आपातयेत् (भेकत्त्वे आपातयेदित्यर्थः)

नैवं तद्गुणयन् स कुत्रचिदपि श्रीरम्यरूपैर्लसेत्
ये तन्त्रेषु भवन्ति दक्षमतयो जानन्ति विद्यां च ये
माण्डूकीं परिसाधयन्ति बहुधा चाश्चर्यशक्तीस्तथा ।।३१।।

वीक्ष्याऽस्याऽऽर्द्रवपुश्च कूर्दिततनुः क्षुद्रं वपुस्सन्मतिः
संसारस्य विचित्रदर्शनमिह प्रालक्ष्यते प्रणिभिः
अन्धे कूप उताम्बुसु प्रवसनं वर्षासु सम्मोदनम्
भूत्त्वैकान्तविमोदितश्च रमणैर्मण्डूकसौख्यं महत् ।।३२।।

त्वं पश्यन्नपि मानुषान् न वदसि, प्रावृट्सु रौसि प्रथा
नव्या चेयमितस्त्वया प्रचलिता, वाञ्छन्ति मण्डूकतां
सर्वे चापि जनाः, वदाऽहमिह वा लप्स्यामि सौख्यं कुतः
मय्युक्ते स उवाच भोः शुभमनो[17] मण्डूकगुण्यो भव ।।३३।।

नैवं स्यात् कलहो न वञ्चनमपि श्रीभिस्तथार्द्रं वपुः
भूयासं कथमद्य मौनगतिको योषित्सुखं रात्रिषु
कस्माच्चैव लभे मया निगदिते वक्तीव मण्डूकराट्
संसारे मतिमद्भिरर्थदगुणः त्वं भेकगुण्यो भव ।।३४।।

कूपे भेक इव स्थितिर्हि भवति श्रौतार्थसौख्यप्रदा
ये चेमां परिनिन्दने रतधियो जानन्ति मन्दाः न ते,
पश्यन्तु स्वयमेव चात्मजगति प्रारीरमेद्दर्दुरः
नव्यं मोदमवाप्नुते, खलधियो मण्डूकतावञ्चिताः ।।३५।।

---

[17] शुभमनस् इति सम्बोधनपदम्

दुष्टानां, परपीडनेन भवतीवाऽऽमोद एवं विना ,
हेतुं ते परिनिन्दनैस्स्वसुकृतं घ्नन्त्यल्पबोधा उत
त्वं गुण्यैः रमणं तनोषि सलिले त्वादृङ्न मोदी नरः
तस्मादीर्ष्यति तुच्छधीश्च भवतो[18] हर्षो महाँल्लोक्यते ।।३६।।

------

लेखनसमयः – वर्षिततौं ,मण्डूकध्वनिं निशम्य, जुलाई २०१५,
रा.सं.सं. भोपालपरिसरच्छात्रावासे ।

...............

## ४९.।। नेमावरस्थल-भ्रमणम् ।।

************

नेमावराख्यनगरे शिवमन्दिरं यत्

18 त्वं स्वीयैर्गुण्यैस्सलिले रमणं तनोषि, त्वादृङ् मोदी नरो नास्ति, तस्मात्स भवत ईर्ष्यति, किन्तु भवतस्तु तथापि महान् हर्षो लोक्यते । भवत इत्यस्योभयत्रान्वयः, पूर्वत्र पञ्चमीलभ्योऽपरतश्च षष्ठीलभ्योऽर्थः ।

तन्नर्मदाजलविशोधितशम्भुपादं
सिद्धेश्वरस्सुकृतिभिस्सलिलैश्च सिक्तः
कांस्कान्न चिन्तितपदान् प्रददाति भक्त्या।।१।।

अत्रैवास्ति च भीमपूजितमहो तेनैव संस्थापितं
रम्यं रम्यपरम्परान्वितजनैश्श्रद्धाभिराभावितं
लिङ्गं शैवमतीवपुष्टिकरणं दिव्यार्चिषां सच्चयं
दृष्ट्वा तं विधिना समर्च्य पुरुष: पापानि नूनं दहेत् ।।२।।

मार्गे गन्धपदार्थविक्रयगृहेष्वन्याश्च कन्यास्तथा
तिष्ठन्त्यत्र पुरीयनिर्धनजना: तीर्थे धनस्याशया
वृद्धास्सिद्धजना: द्विजाश्च मुनयोऽहो भिक्षुकास्साधव:
पीतश्वेतसुरक्तवस्त्रलसिता: रुद्राक्षकण्ठास्तथा ।।३।।

केचिद्रामं जपन्तो हरिहरिरिति वा शब्दमुच्चारयन्ति
केचिद्घोषैश्च मन्त्रान् यजनविधिगतान् याजकाग्रे ब्रुवन्ति
केचिद्वा लड्डुकं हो गणपतिवदने यत्नतस्स्थापयन्ति
अन्ये केचित्तुलस्याऽऽवृतशुभगलका: चन्दनं घर्षयन्ति।।४।।

केचिन्नृत्यन्ति विष्णो: भजनरवकरं तालमाश्रित्य हृष्ट्वा
केचिद्गायन्ति शम्भोश्शुभचरितमहो श्रोतृकान् वीक्ष्य धर्म्यान्
घण्टां शङ्खं मृदङ्गं हरिचरणगता: वादयन्तो दिनान्ते
धर्मोद्घोषध्वजैश्चापि सुनगरमिदं नूनमाच्छादयन्ति ।।५।।

चौबेदिनेशसहितेन मयाऽधुनाऽहो

देवेन्द्रपाठकयुतेन हिमांशुनैव
गौडेन दर्शनमिदं हृदयेश्वरेण
कृत्त्वा शिवस्य, सफलं बत नो हि जन्म ।।६।।

देवेन्द्रपाठकश्चासौ हरदा-नगरे द्विजः।
जातो, विज्ञाय मित्राणामागमनं स्वकस्थले।।७।।

साक्षात्काराय चागत्याऽप्यस्माभिस्सह मेलितः ।
प्रसन्नात्माऽभवत्सद्यो दृष्ट्वा मित्रमुखान्यहो।।८।।

वहन्तीं नर्मदां दृष्ट्वा चौबे स्नानं समाचरत्।
हिमांशुस्त्वाचरत्स्नानं पुरैव जैनमन्दिरे।।९।।

चत्वारस्ते गतास्तत्र स्वल्पाहाराय चापणे।
प्राप्यते पायसं यत्र सुस्वादुः, नातिरूप्यकैः।।१०।।

लवणहरितमरीच्यामिश्रितं वै हरिद्रा-
युतमपि हह जम्बीराम्लरस्याश्रितं च
क्वथितजलनिधाप्यैस्तण्डुलैर्निर्मितं यत्
धनकृतदशमुद्रालब्धमेतच्च "पोहा" ।।११।।

प्रगतवन्त इमे तदा द्रुतं
मिलति यत्र सदुष्णकं मधु
अथ निपीय जनो हि यत्सुखैः

समुपैति नवत्त्वमिवाश्रयं मुदा।।१२।।

पायसानाम् आलुकान्नव्यञ्जनस्य धनं तदा।
दत्तं देवेन्द्रविप्रेण पाठकेनाऽचिरं शतम् ।।१३।।

चौबेदिनेशो जानाति देवेन्द्रस्य विपन्नताम्।
किन्तु सौहार्दयुक्तस्य को हस्तं रोद्धुमर्हति ।।१४।।

मामैकान्तं समानीय चौबे चौदार्यचेतसा ।
वक्ति देवेन्द्रविप्रोऽयं धनहीनोऽधुना गृहे ।।१५।।

तिष्ठत्येतस्य नैवास्ति वृत्तिः काचिद्धनप्रदा ।
सीदत्येष हि दुर्दैवात् लोके किन्तु स्मिताननः ।।१६।।

वयमिमं विजानीमो मित्रचित्तापहारिणम् ।
राजश्रीगुटिकां विप्रश्चर्बयत्यन्वहं मुहुः ।।१७।।

शतं दत्तं यदाऽनेन भातं मे तत् सहस्रवत् ।
नैर्धन्येऽपि कथं चास्य हृदयस्य विशालता ।।१८।।

ब्राह्मणा ननु धन्यास्ते वित्तहीनास्सुहृद्वृताः ।
न प्रेमात्मीयभावं च त्यजन्तीव विपद्गताः ।।१९।।

इति वार्तामये मार्गे गच्छत्स्वस्मासु पाठकः ।

मूत्रत्यागोत्सुकस्तत्र व्यनैषीन्निमिषाष्टकम् ।।२०।।

चायपानचिकीर्षुर्वा गौडो वर्तत आपणे ।
इति विज्ञापयँश्चौबे स्थिरोऽभूच्-चायवाञ्छुक: ।।२१।।

हृदयेश्वर एवं तच्चायपानं समिच्छति ।
चत्त्वारश्चत्त्वरे चायं चषकैस्सम्पिबन्ति ते ।।२२।।

पीत्त्वा हिमांशुना दत्तं मूल्यं विंशतिरूप्यकम् ।
साक्षात्कारस्थलं सद्यस्स्फूर्त्त्या ते यन्ति यत्नत: ।।२३।।

जैनानां सत्यसंस्थायां पूर्णायुष्यायुषां श्रुतौ ।
आधृत्य जैनराजेन प्रकल्पाऽस्य कृता ध्रुवम् ।।२४।।

नृणामारोग्यकार्याय शिक्षायुर्वेदगामिनी ।
स्यात्, पुष्टिं सौख्यमीयुश्च येन जाना:[19] निरन्तरम् ।।२५।।

अहो जैनगुरुस्सोऽत्र श्रीविद्यासागराभिध: ।
त्यागमूर्तिस्तपोमूर्त्ति: करान्नादो दिगम्बर: ।।२६।।

शिष्यैर्दिगम्बरैर्जैनैस्सहस्रैश्च जनैर्वृत: ।
नेमावरे यतिस्सोऽत्र चातुर्मास्यव्रतं चरेत् ।।२७।।

19 जनानां समूहाः जानाः (समूहार्थे अण्)

भोजनं शुद्धमिष्टं च सात्त्विकं जैनधार्मिकम् ।
व्रतीनां भोजनं चान्यत्फलाहारादिरूपकम् ।।२८।।

जैनराजस्सदा वस्त्रपूतं कूपजलं पिबेत् ।
इत्येषा महती शुद्धा व्यवस्था चात्र कल्पिता ।।२९।।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ।
धृत्त्वा चरेत्पृथिव्यां योऽनुपानत्को महामुनि:।।३०।।

सर्वे परिचितास्तेन साक्षात्कारे यथाक्रमम्।
नामप्रदेशशिक्षाद्यैस्सूक्ष्ममार्गेण बोधिता: ।।३१।।

तत: प्रयागराजस्य यो वै शाब्दिकराड् मत: ।
ललितस्स त्रिपाठीति तिष्ठेत्तत्र परीक्षक: ।।३२।।

जैनोऽमितोऽपरश्चासीज्जैनशास्त्रे परीक्षक:।
स्याद्वादाख्ये प्रवक्ता यो महाविद्यालयेऽधुना।।३३।।

त्रयस्त्रिंशज्जनास्तत्र नानादेशेभ्य आगता:।
नानाशास्त्रयुता: सर्वे पदप्राप्त्यैककाङ्क्षया ।।३४।।

यातायातधनं तेभ्योऽमितद्वारा प्रदापितम् ।
भोजनं चापि ते सर्वे कृतवन्तो जिनालये ।।३५।।

अन्नपानादिकं यस्य यत्र वा लिखितं यदा ।
धात्रा तत्र तदा लभ्यं भवेदेतद्विनिश्चितम् ।।३६।।

हिमांशुर्गौड एषोऽत्र काव्यं य: कुरुते सदा ।
चिन्तनाजुष्टतुष्टस्स नानाकल्पनसंयुत: ।।३७।।
..............

## ५०.।। शिवस्तुतिः ।।
************

किमेभिर्देहस्य प्रतिदिनममहो शोषणकरैः
व्रतैस्तप्यैर्जप्यैर्नियमयममार्गैश्श्रुतिसरैः
च्छलाद्धीनो भूयात्प्रथममथ शम्भौ धृतमनाः
अवश्यं लभ्यं स्यात् सकलसुपथानामिह फलम् ।।१।।

न वित्तैश्शास्त्राणां क्वचिदपि मनुष्यः प्रलभते
फलं, नानुष्ठानैर्बहुविधजपैर्नैव तपसा
श्रुतीनां तत्त्वं यत्सकलजनतासु प्रतनुते
त्रिकालं तत्सत्यं शिवभजनभावेषु रमताम् ।।२।।

न ते मूढाः जानन्त्यखिलतपसामेकशरणः
शिवो लभ्यो नाऽऽडम्बरयुतजनैश्शास्त्रविधिभिः

सदा सोपानेषु भ्रमितमतयो यान्ति न सुखं
खगीं वृत्तिं श्रित्त्वा शिवमिति पदं हृत्सु धरतु ।।३।।

गुरूणां वाक्यानामिदमहमहो लक्षितफलः
समस्तश्रौतानामथ सकलजीव्यस्य सुखदम्
समैर्विद्वद्भिर्वा शिव इति हि मार्गो भयहरः
तदेवं चैवास्ति प्रभुभजनमेकं हि शरणम् ।।४।।

न वै मोक्षो लभ्यो न च सुजनवृन्दैस्सुरपुरो
न सौख्यं चारोग्यं विमलयशसाम्प्रौघ उत वा
धनं नायुष्यं स्यान्न मृगनयनीभिश्च रमणं
शिवं त्यक्त्वा ये र्विभ्रममतियुताः लोकशरणाः ।।५।।

न मे कश्चित्खेदो नहि मनसि दुःखं न हृदये
स हर्षो वै नष्टो विपुलधनता चर्द्धिरतुला
यशो लभ्यं येनापदिगतजनस्संविजयते
समं विश्वासं शङ्करकृतदयाभिस्सुलभते ।।६।।

जगच्छत्रुर्भूयादपि विषमचक्रं च चलतु
उदीयाद् दुर्दैवो विपदि पतितोऽहं यमगणैः
कुदृष्टो वा भूयासममरगणैः क्रुध्दनयनैः
जहामि स्वं शम्भुं क्वचिदपि न मेऽसौ दृढमतिः।।७।।

यदा शम्भौ धत्ते प्रमुदितमनास्स्वस्य हृदयं
न चिन्ता प्राणानामित उत गरीयान्न भवति
कुतः क्षुद्राणां यौवनधनयशोमाननिभृतां
कथा येषाम्मोहस्समुदितविनाशेषु भवति ॥८॥

जनान्पाहि त्वं श्रीभवभयहरश्शङ्करगुरो!
विना त्वन्नो जीवश्श्वसनमपि कर्तुं प्रभवति
निपत्य प्रोल्लीलाभृतभयदजगति स्मरहर!
नरान् को वा त्रायेद्यदि न भजनं तेऽस्तु हृदये ॥९॥

न देवास्त्रायन्ते विधिहुतमखाः दानमपि वा
अतः कि क्षुद्राणां स्वहितपरकाणां विलपनम्
मनुष्याः नैवं तं तव चरणसेवाविरहितं
वयं हार्दैः भावैश्शिव! भव! नतास्स्मस्तव पुरः ॥१०॥

अहं वारं वारं च्छ्लकुवचनैर्दुष्टमतिभिः
कुमित्रैस्संसारैरथ परिवृतैर्दुःखमगमम्
प्रशान्त्यै दुःखाग्नेः भ्रमितमनसा न क्व गतवान्
परं तेऽन्यन्नाऽहो विगतपरितापोऽभवमहम् ॥११॥

गुरो सत्यं सत्यं वदति जन एषस्तव पुरः

मुहुस्तापैस्तप्तः प्रतिदिनमिमं मां प्रदहने
इमे दुष्टाः लग्नाः च्छलकपटदक्षाः कुमतयः
अतस्तान्दुष्टाँस्त्वं जहि शिव! विधेहि प्रबलताम् ।।१२।।

अपि क्षुद्रस्तुच्छश्श्रुतिपथविहीनः कुपथगः
न शास्त्रं सेवेन्न श्रमरतसमुद्योगसुमतिः
न पूज्याश्चेद्देवाः प्रबलधनभृन्नैव गुणवान्
श्रियस्तं त्यज्येयुर्न हि शिवदयाजीवितजनम् ।।१३।।

वयं प्रोच्चैर्वच्मो यदि हृदयगेहे न स शिवो
भवेच्चास्मज्जीव्यं सुरभिरहितं नीरसमिव
न काव्यं कर्तुं वा श्वसनमपि कर्तुं कथमथ
प्रभूयास्मः सर्वं शिवजलसमार्द्राश्च धनिकाः।।१४।।

गुणास्तं सेवन्ते न च स गुणितानामनुचरः
श्रियस्सम्मानैर्वै शिवहृदयमायान्ति शुभदाः
धनान्युद्धन्यन्ते हरममुमवाप्य प्रमुदिताः
महान्तो येऽप्यन्ये गुणपदपदार्थाश्च महिताः ।।१५।।

सुधीनामीड्यस्त्वं सुरनरमुनीनामपि हर!
जटागङ्गावारिन्! त्वमथ जगतामेकशरणः
त्रिशूलाच्छिन्धि त्वं मम सकलशत्रून् त्रिपुरहा

मदीयं त्रैविध्यं जनिजरमृतीनामपि भयम् ।।१६।।

अथ त्वं भो शूलिन्! सकलजगतां वै रचयिता
समेषां जीवानां भरणकरणस्त्वं विजयसे
रतः कल्याणार्थं निशि दिवस एषां करुणया
ह्यतो मृत्युं दातः! त्वमपहरसि स्तौति यदि ना ।।१७।।

विधाता भाग्यानामपि कुमतिविध्वंसनकरः
विहर्ता कैलासे बुधजनधियां बोधनकरः
नियन्ता सर्वेषां भुवि दिवि शिवश्शङ्करहर!
भवस्सृष्टा नष्टा त्वमसि जगतां पालनकरः ।।१८।।

न देवानन्याँस्त्वामपि शिव विहायाथ पुरुषः
कथं ध्यायेत्पूज्यान्न फलमत एषस्सुलभते
यतस्तेऽवज्ञा नून् पतनवदने पातयति च
समं भृष्टं शम्भो! न शिवमनसा तेऽन्यगतिकः ।।१९।।

-

एतां शिवस्तुतिं कृत्वा हिमांशुश्शिवभक्तिमान्।
कल्पनां कृतवानन्यां हरागमनसंयुताम् ।।२०।।

-

वृषारूढो शम्भुर्व्रजति भुवि लोके सुखमनाः
मयूरे च स्कन्दो गणपतिरथाऽऽखौ शिवसुतः
उमा सिंहे पश्यन्त्यपि विविधजन्तून् गतिमयान्

स्वकर्मस्वासक्तान् पशुखगजडान् मोहपतितान् ।।२१।।

ततो दृष्टो ग्रामो द्विजजनसमाचर्चितरजः
हिमांशुर्यत्राऽसौ श्रुतिमननशीलो निवसति
व्रजन् गङ्गातीरं शिवकुलमथाऽवेक्ष्य मुदितो
महाहृष्टो वाचा शिवगुरुमिदानीं प्रवदति ।।२२।।

कुतः कैलासाद् वा शिव! सुरपुरादत्र भुवने
भवानायातो मादृशपशुविमुक्त्यर्थमथवा
गणेश! त्वं ब्रूहि  श्रियमिह ममेश क्व तनुषे
अहो साक्षान्माता मम गृहमयादद्य गिरिजा ।।२३।।

स्तुतिं कर्तुं युक्तोऽभवदिह हिमांशुस्सुरगिरा
अरे शम्भो! मज्जीवनफलमिवासि ध्रुवमहो
क्व पुण्यापेक्षा वाऽन्यफललभनेच्छा मम भवेत्
त्वमेवाऽसौ भासस्सकलजगतामेकनियमः।।२४।।

कुतो नश्यो जीवः क्व च शिव! तवालोकनफलं
महापुण्यप्राप्तं भवति शतजन्मक्रतुफलैः
मया लब्धं मन्ये समय उदितो मेऽद्य सुकृतेः
शिवश्श्रुत्त्वा चैवं विनयसहितं विप्रकथनम् ।।२५।।

अवोचद् भो विप्र! त्वमसि मम भक्तः प्रियतमो
वरं ब्रूहि श्रीणां धनकमलनयनासुयशसाम्
यतस्तुष्टोऽहं ते सकलमपि चिन्त्यं सुखमयं

प्रदाने शक्तोऽस्मि श्रयतु निजवाञ्छां मम पुरः।।२६।।

हिमांशुः किं याचेत् सकलफलरूपं शिवमिमं
विलोक्याऽहो, मूढः क इह पतितुं चिन्तयति वा
इमाँस्तुच्छान् भोगान् परिणतिकुकष्टान् भवकरान्
अतोऽवोचद् वाचाऽश्रुनयन इव श्रीभवहरम् ।।२७।।

प्रभो! तेऽन्यत् किं वाञ्छति भयभरेऽस्मिन् निपतितो
मुधा जीवः कष्टाश्रिततनुरहो तुच्छगतिकः
शिवो दातुं वाञ्छस्यपि यदि च किञ्चिन्मम कृते
हर! त्वं सर्वेषां सकलमपि कष्टं सुरगुरो!!२८!!

हिमांशो! हे! लोके ह्यसुमति न सौख्यं ह भवति
अयं दुःखागारः, क्व लभत जनास्सौख्यमिह वा
स्वकर्माक्रान्तोऽहो विषयफललिप्सासु निरतः
जगच्चक्रे नानाविषमगतिके भ्रान्तमतिकः ।।२९।।

सदा सत्कर्मण्येवास्तु च हृदययोगश्च नितरां
परेषां पीडानामपसरणसुयत्नो यदि जनो
विरागश्चात्र स्याद् विषयजकुसङ्गे यदि सुनुः
स दुःखानां लोके न हि दहति चित्तं निजमिदम् ।।३०।।

इति श्रित्त्वा सौख्यं सकुलशिवराट् स्वालयमयात्
हिमांशुर्धन्यत्त्वं गतमिव विभोः दर्शनफलः
तदा स्वप्नो भङ्गो भवति सुजनस्यास्य सहसा

इदं दृश्यं दृष्टं शयनवशयातेन सुकृतम् ।।३१।।

-------

(अस्याश्शिवस्तुतेः एकोनविंशतिश्श्लोकाः २०१४ ख्रिस्ताब्दे रचिताः विंशतितमः १३/०२/२०२० दिनाङ्के , तत आरभ्य एकादशतमपर्यन्तं च २०१५ तमे ख्रिस्ताब्दे रचितास्सन्ति )।

| ।। डॉ.हिमांशुगौडस्य संस्कृतकाव्यरचनाः ।। | | |
|---|---|---|
| १ | श्रीगणेशशतकम् | (गणेशभक्तिभृतं काव्यम्) |

| | | |
|---|---|---|
| २ | सूर्यशतकम् | (सूर्यवन्दनपरं काव्यम् ) |
| ३ | पितृशतकम् | (पितृश्रद्धानिरूपकं काव्यम्) |
| ४ | मित्रशतकम् | ( मित्रसम्बन्धे विविधभावसमन्वितं काव्यम् ) |
| ५ | श्रीबाबागुरुशतकम् | (श्रीबाबागुरुगुणवन्दनपरं शतश्लोकात्मकं काव्यम्) |
| ६ | भावश्रीः | ( पत्रकाव्यसङ्ग्रहः ) |
| ७ | वन्द्यश्रीः | (वन्दनाभिनन्दनादिकाव्यसङ्ग्रहः) |
| ८ | काव्यश्रीः | (बहुविधकवितासङ्ग्रहः) |
| ९ | भारतं भव्यभूमिः | ( भारतभक्तिसंयुतं काव्यम् ) |
| १० | दूर्वाशतकम् | (दूर्वामाश्रित्य विविधविचारसंवलितं शतश्लोकात्मकं काव्यम्) |
| ११ | नरवरभूमिः | (नरवरभूमिमहिमख्यापकं खण्डकाव्यम्) |
| १२ | नरवरगाथा | (पञ्चकाण्डान्वितं काव्यम्) |
| १३ | नारवरी | (नरवरस्य विविधदृश्यविचारवर्णकं काव्यम् ) |
| १४ | दिव्यन्धरशतकम् | (काल्पनिकनायकस्य गुणौजस्समन्वितं काव्यम्) |
| १५ | कल्पनाकारशतकम् | (कल्पनाकारचित्रकल्पनामोदवर्णकम्) |
| १६ | कलिकामकेलिः | (कलौ कामनृत्यवर्णकं काव्यम्) |